चास्य यत्र सꣳस्तुतस्य स्तोमस्य प्रथमा भूयिष्ठभाग् भवति तां ब्रह्मायतनीयेत्याचक्षतेऽथ यत्र मध्यमा तां क्षत्रायतनीयेति च गर्भिणीति चाथ यत्रोत्तमा तां विडायतनीयेति स खलु पर्यायान्त्सꣳहरन् मस्त्वान्यायं विडायतनीयाभिः प्रथमां पर्याय विशेष मिति वर्ज्जयन्त्समान्त्समा मेव चिकीर्षेदिति ॥ १० ॥

अथातो विधिशेषान् व्याख्यास्यामो नोपवसथ्ये ऽहनि न समामनेरन्वागाथायिनी प्रयुज्येतेत्यथैताः कुशा उपकल्पयत औदुम्बरीर्वा पालाशीर्वा यो वान्यो यज्ञियो वृक्षः प्रादेशमात्रीः कुशपृष्टास्त्वक्ताः सगा मज्जतो ऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञातायाः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सत्रेषु खादिरी दीर्घसत्रेषु वेष्टुतेन वसनेन परिवेष्टौदुम्बरी मध्याधिक्रमसंयेत् क्षौमꣳ शाणं कार्पास मिति वसनविकल्पा औदुम्बरी मुपृत्य न विसृजेदाच्छदिषोऽध्यूहनाच्छ्रीभूत एनाः मूलाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोद्दशेन वसनेन प्रदक्षिणं परिवेष्टा स्पृष्टो ऽनपसृत उद्गायेदिति गौतमो धिष्णो ऽयं भवति न धिष्ण्यम् मासादयेदिति धृष्ट मपश्ययेतेति धानञ्जय्यो पशुयशार्थेयं भवतीति साऽप्य औदुम्बरी मङ्गलायैवोभुक्त

उदकसेवी बहुपलाशो नातीवाफलो भवतीति प्राक्समासं वोदक्समासं वोपरिदश माध्यमीयं प्रस्तोता विष्टुतीर्विदध्यादुदग्राभिः प्रथमं विष्टावे प्राक्संस्थं प्रत्यक्संस्थमित्येके पश्चात्प्रथमस्य त्रिष्टावस्य प्राग्ग्राभिरुदक्संस्थं द्वितीयं प्रत्यगग्राभिरित्येके पश्चाद्वास्य मध्यमस्य त्रिष्टावस्योदगग्राभिः प्रत्यक्संस्थं तृतीय मेतयावृताः पर्यायान्विदध्यादृच्छिष्टार्थं प्रथम मनुपूर्व मुदीचः संहृतान् विष्टावपर्यायान् विदध्यादितरैश्छिन्नतरैणा शिरसि कुशानु विधीयेरन्नित्येके पराङ्मुखादावर्त्यद्भावा तु विधीयेरन्नेतेन सुप्त्विक्ता स्त्रिवृत उद्गात्या विधाने विप्रतिपद्यते यथैकः पर्याय इत्येके तृचभागा स्थानेषु पर्यायाणां पर्यायाः स्युरित्येक एतेनैकजातीया व्याख्याना व्याख्याताः ॥११॥

अथातः सामान्तानां चत्वारो भागाः समाख्याः स्वरो निधन मिडा वाक्यानि स्वराण्याग्नेयानि तानि गायत्रतया वायव्यानि वा यानि निधनवन्त्यैन्द्राणि तानि त्रैष्टुभतया यान्यैडानि वैश्वदेवानि तानि जागततया यानि वाङ्निधनानि प्राजापत्यानि तान्यानुष्टुभतया ऽव खल्वस्य सर्वश्छन्दसो निधनार्थेय मृक्तं भवन्त्यथेमौ स्वरौ सन्तौ निध-

नेषु समाम्नायेते इकारोकारौ कस्य हेतोरिति यान्यन्यानि स्वराण्यसिद्धोपायानि तानि भवन्त्यच एव तेषां मध्यं व्यवस्वरणं भवत्ययमौ सिद्धोपायौ भवतो वागुपायावित्यथापि निधनस्थानेषु युज्येते स्वरैश्च सनिए तत्तो निधनवादस्तैनयोर्भवति तं वैराजस्य निधने नाहᳲहन्नित्यथाप्येनौ वाक्यविलोपके वाहुरिहेति वेद मिति वा सदो विलुप्त ईकार ऊर्द्ध मिति वा विपरीतिना सदो विलुप्त ऊकारस्ताव- प्यनुनासिक्यौ भवते वाक्यविलोपत्वादेव तद्यच्च च्चैते सामान्ता भवन्ति स्वरो निधन मिडेति तदे- तान् प्रकृष्टा इत्याचक्षते ऽथ यत्र समानसामान्ते सन्निपततस्तज्जरमीत्याचक्षते समानपृष्ठे वा अहनी समानभक्तिनी च खलु नानात्वप्रक्रान्तेष्वेवाजामि भवत्यथ यत्र समान मभ्यस्यते साम वाऽहर्वा जाम्येव तद्भवति सामान्यान्नसामान्नैर्नानत्वः संयुजामि भवति ॥ १२ ॥

अथैतान्यन्तरेण व्यवयन्त्यजामिकरणानि भवन्ति सोमो वषट्कारः भक्ष मवयवो ऽथ यत्रान्तरेण सामानि गीयथातिच्छन्दसं परिमाद इति तत्राथ यत्रैक सार्वत्र्निस्थानं नना सामानि समवयन्ति यथा

व्रत ऐकसाम्न स्थान मिति तत्राचाथ यत्र समासान्ता
न्यत्यन्ते यथा विश्वजिति तत्त्राथ यत्र समान-
सामान्ते सन्निपतन्तो मध्ये निधनेन तत्र यत्रो मध्ये
निधनेनान्नैः पृथगिति तत्तत्र यत्रो न विद्यतेऽर्थः
सन्निपतति त मर्थो ऽजामिकरण इति तत्तत्र सर्वत्र
रथन्तरसन्निपाते जामि भवति तथा बृहत्संन्निपाते
तचैतान्यजामिकरणानि सौभरं प्लवत्यो बृहदि-
त्येषोऽभिव्याहारो वार्कजम्भ बृहन्निधनानीत्युक्तं
रथन्तरसन्निपातेषु कण्वरथन्तरं मभि भवति रथ-
न्तरणिधनानीति बृहत्संन्निपातेष्वेतावता खलु
जामि कृन्य समन्वीचेत नदस्तिखित्साम्नश्छन्दो
देवता नास्तीति नास्तीति धानञ्जय्यः किं स्वरस्य
छन्दो भविष्यति का देवता मितानुरो भवतीत्याश्व-
तरगौतमौ यच्छन्दस्यायां मृचि गीयते तदस्य छन्दो
यद्दैवत्यायां साम्न देवता तद्विजानीमो यत्स्वयोन्यः
स्वयोनिनापचिततरं भवत्यथाप्यैन्द्रेन्ध्य. ऋत ऐन्द्रं
सामेति द्रजेति ॥ १३ ॥

॥ इति निदानसूत्रे प्रथमः प्रपाठकः ॥

---

॥ अथ द्वितीयः प्रपाठकः ॥

ऋषिकृतस्यूहा३ अनृषिकृत इति वै खल्वाहु-र्यद्यविरता एकोहनाम्नो एव मार्षेयो भवत्यथाप्यूह इत्येव माचक्षते कर्त्तव्य इतीवेतद्भवत्यथापि याज्ञिका विप्रतिपद्यन्ते यज्ञार्थः खलु पुनरूहो भवत्यथापि वृत्तियोनिरिति गायन्ति किमु खलु स्मृती वृत्यां किं योन्यां भविष्यतीत्यथापि नात्यन्तं गायन्ति तत्र यदगीतं कर्त्तव्य मित्येवापन्ना भवत्यथापन्नसंहृतस्य संहिता भवेत्त्रो गायन्ति तदेतत्स्मृती नोपपद्येत इत्यृषिकृत इत्यपरं कथ मेव बहूनार्षं यज्ञे क्रियेता ऽथापि बृहदुत्तरयोर्नाभिपश्यामीति भरद्वाज स्तपो ऽतप्यत रथन्तर मुत्तरयोरिति वसिष्ठो विद्यमानस्यैवोहस्याभिवादो भवत्यनेनैव वासिष्ठभरद्वाज मित्याचक्षते ऽथाप्याचार्यस्मृतीनां वक्ता न मतिशङ्कमानः सर्वत्रैवातिशङ्कता ऽथापि योनिप्रतिषेधादस्मृत मन्येतापि नूनं समर्च मेवाप यज्ञ मस्मृतं मन्येत यज्ञे ह्यपि विप्रतिषिद्धा भवन्तीति यद्येतदद्यापि रता एवोहनादित्यगीतोहास्ते भवन्त्यप्रमाणा मु खल्वनधीयानो यद्येतदूह इत्येन माचक्षत इति भवन्त्ययथार्थं

नामधेयानि यद्येतद्याज्ञिका विप्रतिपद्यन्त इत्याचार्यकल्पे याज्ञिका विप्रतिपद्यन्ते स एव विस्मृतः स्याद् ब्राह्मणविप्रतिपत्त्या च यज्ञमथ स्मृतं मन्येत यद्येतद्वृत्तियोनिरिति गायत्रीति छन्दस्याधीच्छका वृत्तियोनी कल्पन्ते भवन्ति वापेत्य वृत्तियोनिभ्यामाचार्यप्रोतानि यथा पार्थ-लौश-शार्ङ्गाणि यद्येतन्नात्यन्तं गायन्तीति कल्पा अप्रानत्यन्ता भवन्ति यथावाप्रवानेकाहः श्रीलोमा उत्तरा तरतिरनुब्राह्मणिनामिति यद्येतदन्यसंहितस्य संहिता मवेत्य गायन्तीति छन्दस्यपि वृत्तिज्ञोऽन्यसंहितस्य संहिता मवेत्य गायेन्न तावता छन्दो ऽस्मृतं मन्येताथापि य उपवादादस्मृतं मन्येतापि नूनं संमर्ज्ञा मेवापिनं त्रयीविद्या मस्मृतां मन्येत तां ह्येक उपवदन्तीति ॥ १ ॥

एकर्चदृष्टीनि खितं सामानी३ तृचदृष्टीनीत्येकर्चदृष्टीनीति शाण्डिल्यायनस्त्विदानीमश्छान्दसेनाध्यायेनैकर्चान् भूयिष्ठांश्छन्दास्वधीमहे ऽथापि नो यज्ञ उपदृष्टिः प्राह यदन्नं धृष्णोत्येकर्चान्कर्तु मथाप्येकर्चैः स्तोमान्त्समिमत एकर्चान् ह वय मधीमहे नाध्वर्यवश्चचा उत्तरे अभिजानन्तीति तृच मदृष्टीनीति

धानस्तथ्यं तद्विजानीमश्छान्दसिनैवाध्यायेनैकर्चानधी-
त्य तृच मुत्तम मधीमहे निदर्शनार्थो वै स भवत्येव
मेवातः प्रागित्यथापि नायन्न एवोऽपदृष्टिः प्रश्नो काम
एवार्धेकर्चान् कर्तीत्यथापि न ऋचः पूर्वा स्तोत्रियाणि
प्राहुर्द्वितीयायां चाथ तृतीयायां चर्चि लक्षणं
भवति यद्यार्षेयं तत्साम भवतीति यथाकूपार मैषिर-
मग्नीत्कन्मन मित्यथापि छिन्न मिव वा एतद्द्वे-
कर्चा इति ब्राह्मणवादः परिचष्टे ऽथापि जनुषै-
कर्चौ नामाधीमहे तृचदृष्टित्वादेवाथाप्यधुनैव दैव-
त्वादे यस्तृचापन्नं छन्दोऽनुजगावु ।वचदृष्टीनीति शा-
ण्डिल्योऽप्यन्तर्षिर्यथादैवतान्यपेरकार्णे यथासामीत्ये-
तान्यपेरकर्चां यथाभूयिष्ठान्यपि द्वयोर्यथातीषङ्ग
अपि तिसृषु यैथा सन्तनीत्यपि चतसृषु यथेलान्द
मपि भूयसीषु यथा पुरुषव्रतं कश्यपव्रत मादित्यव्रत
मित्यपि दैवतान्येके सामसूक्तानीत्याचक्षत इत्या-
चक्षत इति ॥ २ ॥

अथ इमानि सामानीति प्रदिशन्ति यान्यपुर-
स्तात्स्तोभानि पदनिधनानि लघुगीतीनि तानि
राथन्तराणि यानि पुरस्तात्स्तोभानि बहिर्णिधनानि
गुरुगीतीनि (उपान्तपञ्चम्यां पञ्चिपञ्चकं गच्छन्तं तानि

राथन्तराणि यानि गुरुगीतीनि बार्हतानीति *)
(तानि बार्हतानि अथान्यतरतो राथन्तराणि चान्यतरतो बार्हतानि चाप्युरस्तात्स्तोभानि च बहिर्णिधनानि च पुरस्तात्स्तोभानि च पदनिधनान्यथोभयतो बार्हतानि च पुरस्तात्स्तोभानि च पदनिधनानि गुरुगीतीनि पुरस्तात्स्तोभानि बहिर्णिधनानि लघुगीतीन्येतानि विजिज्ञासितेति शाण्डिल्यायनो यानि लघुगीतीनि राथन्तराणि यानि गुरुगीतीनि बार्हतान्यपि यान्युदात्तगीतीनि तानि राथन्तराणि यान्यनुदात्तगीतीनि तानि बार्हतानीति †)
कल्पेनैव यज्ञकामा व्याख्याता यथैतत् स्वर्गकामो यज्ञः पशुकामो यज्ञः प्रजापतिकामो यज्ञोऽभिचरणीय इत्यप्याहुरुद्गार्थ एव खल्वयं भवति खल्वर्थे स्वेभ्योऽन्येभ्यो अन्ववयन्तीत्याप्तकामास्त्विहैवा स्युरन्ता३ अनाप्तकामा इत्यनाप्तकामा इति वै खल्वाहुः को ह्याप्तकामस्य स्तुत्या कः प्रत्यर्थी भविष्यतीत्यथाप्याहुः अप्रकृतं ह्याप्तकामा एव भवन्ति तमस्यवादेन जानीमो यस्मै देवाः कामयन्ते तस्मै समर्धयन्ति कुतोऽनाप्तकामाः समर्धयिष्यन्नित्यथापीहैव पश्याम आप्तका-

* एतावानंशः ख पुस्तके नास्ति । † एतावानंशः ख पुस्तके नास्ति ।

मतराणा ममग्नकामैरीप्सां यथैतद्राज्ञा मित्यथापरत्वंक मवदायाह विश्वेभ्यो देवेभ्यः स्वाहेति कुतो ऽनाग्नकामान् प्रति भविष्यदित्यथापराहुर्द्विस्थाना देवा भवन्ति न्यून मन्यत् स्थानं सम्पूर्ण मन्यद्यदु ह न्यूनं तद्दितः प्रत्तैः प्रति विभवन्ति यदु सम्पूर्णं तत्स्वाशिषः समर्द्धयन्तीति ॥ ०३ ॥

कथ नु खल्वङ्गकामा इति विद्यन्त इत्येके श्रुतिप्रमाणा अङ्गे श्रूयमाणां कथं क्रतौ प्रतीयामेत्यथापि योऽङ्गकामं क्रतुं कामयेतापि नूनं सोऽङ्गे दृष्टे सर्व मेवापि क्रतुं दृष्टं मन्येताथापि पृष्ठहोमं सर्वेषां स्तोत्राणां मन्येतेति क्रतुकाम इत्यपरं क्रतुः खल्वधिक्रतोऽङ्गैश्च कामैश्च भवत्यथापि न आर्षेयकल्पो दर्शयति यज्जातीया प्रतिपद्भवति तज्जातीयानि द्रव्याणि कल्पयति यथा ज्योमामयाविनो वर्षकामस्य जग्ध्या माविधित्समानस्येत्यथापि योऽङ्गकामं मन्येतापि ननं स तदेवाङ्गं कृत्वा विरमेत्तस्मिन् हि स कामो भवतीति यदेतदङ्गदोषात् क्रतुदोष इति विषये खलु दोषो भवति न तथाकामो यदेतत्पृष्ठहोमं सर्वेषां स्तोत्राणां मन्येतेति भवन्ति वा अङ्गधर्मा यथा युग्यस्य घासदान मचस्योपाञ्जन

मिति सम्भूय तु खल्वर्थान्साधयन्तीति कथ मु ब्रह्म-
साम्नि कामागान मिति यथाकामी कामाना
मित्येक आहुरंशादेशे कि मन्यद्याथाकाम्यात्प्रतो-
यामीथाथि रद्देवंब्राह्मणो दर्शयति याथाकामी
कामाना मिति क्रतुकाम इत्यपर मेषोऽधिकृतोऽथापि
यः क्रतुकामेऽधिकृते सत्यन्यं काम मुत्पादयेदपि
नूनꣳ स पशुना तृतीयसवने चरन्तीत्यन्यंपशु मुत्पा-
दयेदो मिति सति समायादपेयादाद्वा वै त मेव
प्रतीयाद्यः प्रतिसवने सदृशं व्याहन्यादेतदनादेश
इत्यादेशजातिरेषा भवति तदाऽदेधिकारो यदेतद्ब्र-
ह्मब्राह्मणो दर्शयतीत्ति सर्वाभिप्राय एतदुपपद्यते
कथ मु खल्वाशीः समृद्धिरुपसरणानीति सर्वस्तोत्रे-
ष्वित्येक आहु स्तोत्रशब्देन च न हि स्तावयत्यपि चाह
निर्देशे किमर्थो ऽवयवं प्रतीयादिति ब्रह्मसाम्नीत्यपरं
ब्रह्मसाम ह्याशीर्द्वान मित्यथापि य स्तोत्रशब्दानां-
स्तोत्रे प्रतीयादाशीःशब्दादपि स नाब्रह्मसाम्नि
प्रत्येतु मर्हतीति ॥ ४ ॥

अथातो यज्ञस्थानान्यपि च सन्धियज्ञा इत्या-
चक्षते ऽहोरात्राभोज्याग्निहोत्रꣳ सायमाहुत्या
रात्रि मभियजते सा यत्र क्व च पुरोदयाज्जुहुयेत स्वे

स्थाने जुहोमीत्ति विद्यात्मातराऊत्याहः सा यत्र क्व च पुरास्तमयाहूयेत स्वे स्थाने जुहोतीति विद्यात् ते तु यदादौ निदधाति प्राप्तस्य होमकालोऽपि चैनं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या* दर्शपौर्णमासौ पौर्णमासेन हविषाऽपरपक्ष मभियजति स यत्र क्व च पुरा ऽऽमावास्या यजेत स्वे स्थाने यजत इति विद्यादामावास्येन पूर्वपक्षꣳ स यत्र क्व च पुरा °पौर्णमास्या यजेत स्वे स्थाने यजत इति विद्यात्तौ तु यदादौ निदधाति प्राप्तस्य यज्ञकालोऽपि † वैधं कृत्स्नौ पक्षावभीष्टौ भवत इत्युक्ताभीष्टा ‡ चातुर्मास्यान्योषधिभक्ताभीज्याग्रयणेष्टी उदगयन-दक्षिणायनयोः पशुसमस्तस्य संवत्सरस्याभीज्या सुत्येति तत्खल्वेतत्सकृत्प्रयुक्त माहिताग्नेः कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी (पशु सोम इति वै ‡°) सर्वं य देवं न करोति ग्लायदिज्याꣳ स्यादित्यननुभूतिजꣳ स्यादिति सिद्धिदर्शी वा स्यान्मूलिपुरोडाशेनाप्नोत्याज्येन च पयसा च प्राणीत्यथाप्याहुरादित्यस्य वावं खलु चन्द्रमाग्नि-

* क-पुस्तकेऽत्र पूर्वत्रापरत्र च सर्वत्रैव "०भीष्टा"-इति पाठः।

† "होमकालोऽपि"-इति ख। ‡ नास्त्ययमंशः ख-पुस्तके।

स्येमानि पर्वाणि कुर्वाणौ ययोरियं मभीज्या भवती-त्यग्निहोत्रेणादित्यस्येज्या मभियजते दर्शपूर्णमासा-भ्यां चन्द्रमसस्तदग्निहोत्रꣳ सायमाहुत्या प्रयुज्यते प्रातराहुत्याभितिष्ठते सोऽपि नाहुत्वा प्रातराहुति मन्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननिष्ठितेऽन्य मुप-क्रामेतेति पौर्णमासेन हविषा दर्शपौर्णमासौ प्रयु-ज्येते आमावास्येन निस्तिष्ठेते सोऽपि नानिष्ट्वामा-वास्येन हविषान्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननि-ष्ठितेऽन्य मुपक्रामेतेति ॥ ५ ॥

तदपरपक्षे प्रायणं परिजिहीर्षितं भवति रात्रौ वा यज्ञविलोपो विसꣳस्थितेऽपि च नो हि तमस एव स्म इयादिति तच्चेदपरपक्षे प्रायणꣳ शङ्केत यावत्यो ऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासाꣳ सायं प्रात-राहुतीः प्रतिसङ्ख्याय हुत्वा प्रत्याहुत्या ऽऽमावास्येन हविषेष्ट्वा समापयेयुरेव मयज्ञविलोप इति पूर्वपक्षे चेद्रात्रौ प्रातराहुति मेव पुरस्तादाहवनीयꣳ हरेयुः पश्चाद्गार्हपत्यं दक्षिणतो दक्षिणाग्निं मध्ये शरीरं तं दक्षिणाशिरसं चितस्याहितं यज्ञपात्रैः कल्पये-दध्वर्युः शिरसि कपालानि युञ्ज्यात्समन्तधानं च चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुचौ कर्ण-

योर्वाद्ये ह्रिरश्मा मंवधांयानुस्तरणिक्वा गोवंपुया मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं तिरश्चीं दक्षिणे पाणौ जुहूᳫं सव्य उपभृतं पार्श्वयोः स्फ्यमोपवेषौ तथा वक्षौ ध्रुवाश्व मुरसिं ध्रुवा मुदरं पात्री मुपस्थे कृष्णाजिन मन्तरेणं सक्थिनी शम्या दृषदुपले यच्च नादेच्यामोः दक्षिणस्योपस्य दक्षिणत उलूखल मनुसक्थि मुसलं पादयोः शकटशूर्पे सर्वाण्युत्तानान्यासेचनवन्ति पृषदाज्येन पूरयित्वाथैनं यथास्थानं युगपदग्निभिरुपस्जेरसार्वस्थानिकं परिमाणᳫं स एष यज्ञायुधी यजमानः स्वर्गं लोक मेतीति ब्राह्मणं भवत्याङ्कविं जुहोति पुत्रो भ्रातायो वान्यो यज्ञियो ब्राह्मणस्त्वस्मात्त्व मधिजातो ऽसि त्वदयं जायतं पुनरसौ स्वर्गाय लोकाय स्वाहेति शान्तिर्वामि देव्यᳫं शान्तिर्वामदेव्यम् ॥ ६ ॥

एकहिङ्कारं बहिष्पवमानᳫं साम्नस्सेकत्वाच्छन्दसस्सेत्याचार्याः साम्ना मनु नानात्व मुत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति पर्यायाणा मनु नानात्व मावर्त्तिषु सन्धौ * विप्रतिपद्यन्त एकहिङ्कार इत्येके यथा बहिष्पवमानं विराचार्या हिं

* "माहभिसन्धौ"–इति क पाठः

कुर्वन्ति देवतानामनु नानात्वं विश्वजितो वा अपि वाद्देवतं बहिष्पवमान मथात्र सङ्कृद्धिङ्करोति सङ्कृद्धिं-कृतोत्पादत्वाद् बहिष्पवमानस्येत्याचार्या अथ यज्ञा-यज्ञीयानुरूपे कथं हिङ्कार इति यथोत्तरयोः पव-मानयोरित्येके ऽस्ति हि सामनानात्वं यथा वा विश्व-जिति नानादेवते सति सकृद्धिङ्करोति सकृद्धिङ्कृतो-त्पादत्वाद्बहिष्पवमानस्य तथा वा स्यादित्यथ योनौ यज्ञं लब्धानस्य कथन्तरे तस्या रथन्तरवर्णा स्याता मित्युभे यथास्थानं स्यातामिति बहिष्पवमाने चोत्पन्ने भवतो न चापि निवर्त्तेयातां यथापि यथा गायत्रं यज्ञायज्ञीयधर्मान् प्रतिपद्येत एव अपि यज्ञा-यज्ञीयं गायत्रधर्मान् प्रतिपद्येत गायत्रस्य बहि-ष्पवमान एष धर्मो भवतीत्यपरं वान्यत्र गायत्रान्न चान्यत्र बहिष्पवमानादिति ॥ ७ ॥

गायत्रस्य काम्याः सामान्ता यावन्निगदं स्युरि-ति के स्वरस्येमे प्रत्याम्नाया भवन्ति तं च किमर्थोऽवयवं प्रतीयादित्यथाप्येव मव्याहृतं गायत्रं भवत्यथापि याथाकाम्यस्याविप्रयोगस्तत्कुशल मथाप्येष प्रयोगाणां धर्मो येन प्रक्रमस्तेन समाप्तिरिति बहिष्पवमान इत्यपर मेतद्गायत्रस्य हिङ्कारस्थानं मथापेतद्गुरां

सामान्तां नातियन्त्यथापेरव मजामि भवत्यथापेरवं यथाभूयिष्ठं भवतीति प्रथमाया मिति वार्षगण्य एतद्बहिष्पवमानस्याशीर्द्दान मन्त्रं हिं काम्याः प्रतिष्टो भवन्तीति रथन्तरवर्णाया मित्यपर मेषा च विकृततमापि च पथ्यप्रक्रमं पथ्यावसानं भविष्यतीति ब्रह्मण आज्य इत्यपरं ब्रह्मसाम स्याशीर्द्दान मित्युत्तरयोः पवमानयोरित्यपर मेतदेतेषाᳫं सामान्तानां स्थान मथापेरवᳫं रोहो भवत्यपि वान्ताख्यानि कर्माणीति यद्येतज्जामीत्यजामि वा कल्पयेतार्थोऽजामिकरण इति वापि तितिचेतानृच्येके गायच्च गायन्ति कस्य हेतोरिति स्वरायैतत्स्थानं कुर्वते स न इत्थं केवलः स्वरो गीतो भविष्यतीति तथा प्रच्छिप्रस्तुत्यानृचि गायन्तः प्रतिहारस्य चानुत्साद मनुप्रायाच्च निधनस्य चानिधनं स्वरित्वा निधन मृत्सीदेदित्याचार्याः ॥ ८ ॥

अथ बृहद्रथन्तरयोर्वदति तयोः समानं निधन मासीत्तस्मिन्नातिष्ठेता मिति किन्निधन मित्यहरिति * कौत्सो ऽकार मेवान्ये सकारोपसृष्टं सकार मेवाह मनयोः समानं निधनं मन्य इति धानञ्जय्यः

* 'मति हरिति"-इति ख ।

स स्तुभयन्न दृश्यत इति निधनब्राह्मणम् । मेधाइ मिदं मन्य इति वार्षगण्यो द्वे खल्विमे पृष्ठे भवत एकं पृष्ठस्थानं तस्मिन्नस्यारभूथा महं पूर्वताया इत्यथैतेषु पुरस्ताज्जपेषु वा इत्येतदुदस्येदित्येक आहुरेतानि मनसान्वोच्योद्गायेदिति हि भवतीत्यन्यदिदं तेभ्यो भवतीति यथाधीत मित्याचार्या न चोदासो विज्ञायते ऽपिवार्थः स्वाङ्गयंक मथापि सशंस्ये लोपो लोपान्यायतर इति कथं पवमानगतयोरिति कर्त्तव्या इत्येके सामसंयुक्ता हि भवन्त्यकर्त्तव्या इत्यपरं स्थानसंयुक्ता हि भवन्त्यथापि पवमानसामनी प्रधानभूते भवत इत्यथापि यद्यु हैतात्पुरस्तात्स्तोत्रादकरिष्यद् द्वाविताबृन्यैः सामभिरभविष्यन् यद् द्वानन्तरान्स्तोत्रव्यवायो ऽभविष्यदेतेन वामदेव्ययज्ञायज्ञीये व्याख्याते बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानां रोहाणा मुत्तमं न रोहेदित्याचार्या अप्रथमायैवं स्याद् बृहतो रोहा बृणी महा मदायिषु वान्तौ पूर्वौ वृद्धे निधनोपाये च द्वितीय मक्षरं वर्द्धयेत्स तृतीयं तदुपरिष्टात्स्तोत्रस्य प्रत्यवरोहेदेवं हि स युवान मृत्विज मनूचान मेत माहुर्यद्वैतेन मप्रत्यवरूढं परावधीदिति ॥ ८ ॥

अथ यज्ञायज्ञीयस्योत्तरयोर्द्यचयोः प्रमीति यथा

बृहद्रथन्तरयोस्तदपि प्रश्नब्राह्मणं भवति तानि ह वा एतानि द्वादशाक्षरप्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयं चेत्यथ खल्वाह यदग्निष्टोमयाज्यनृतं माह तदन्वस्य यज्ञः सवत्य-क्षरेणान्ततः प्रतिष्ठाप्य मिति किं मनृतं किं मक्षर मिति देवत्येतदक्षरं वकारादि राकारो गकारान्त इत्येक आहुस्तस्य गकारलोपं ब्राह्मणं क्षिपतीति तदपि त मुपेयुरेवं कृत्स्नेनाक्षरेण यज्ञस्य छिद्र मपि दधातीत्यार्चिक मेवैतदक्षर मित्यपर मेतस्मिन्हा-ऽक्षरशब्दात्प्रतियन्त्यष्टाक्षरेण प्रथमाया ऋचः प्रस्तौ-ति द्वाक्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहर-तीति न स्तोभिकैः सहोपपद्यते तस्माद्यदेवान्त्य मक्षरं तन्निधन मुपेयुर्यथाधीत मित्याचार्याः स्वर-तन्त्वदण्यक्षराणि भवन्ति स्वरान्ततां मेवाक्षरस्यैतद् ब्राह्मण मेव मवच्य दित्यथापि बह्वलैषां छन्दसी वृत्तिर्बाह्निधनानि चैनान्याचक्षते वागुपायामीति च यदेतदार्चिक मक्षर मिति यथाधिकार मेत-द्भवति स्तौभिकस्येहाधिकारो विज्ञायते ऽथापि संशये प्रकृतिसविध मेव प्रत्येतव्य मिति प्रत्येतव्य मिति ॥ १० ॥

अथ द्रव्यसमुद्देशो राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि बार्हतानि बृहत्पृष्ठेषूभयविधावुभयसाम्नि प्रवदितानि रथन्तरपृष्ठ ऊर्ध्वेडानि बृहत्पृष्ठेऽथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृहद्वैरूपया तानि विद्यादेव मेव बृहत्पृष्ठेन राथन्तराणि स्वयोनीनि सर्वत्राभिरूपतराण्यस्वयोनिभ्यः सामन्यासु ऋचाम सामन्याभ्यश्छान्दसी प्रथमाः सामन्या इत्याचक्षतेऽथ या यज्ञप्रवादाः मन्त्रप्रवादाः क्रतुप्रवादाः सोमप्रवादाः सर्वत्र ता अभिरूपाः शुक्रवत्योऽप्रवादाः पूर्वयोः पवमानयोर्होत्रप्रवादं हविष्प्रवादं समिद्वद्भीतुराज्यं हूतवन्ति पीतवन्ति तृप्तवन्त्युत्तराणि मरुत्वत्यो द्युप्रवादा ऋतवत्यो माध्यन्दिनीयाः परिवत्यः कोशवत्यो निषसवत्योमाध्यन्दिनीया गायत्र्यां वातस्त्रिष्टुभि वा मरुत्वच्चिकीर्षितं भवत्यथ खल्वाहु र्यानि सवनानां छिद्राणि तानि तेनापि धीयन्त इति कतमानि छिद्राणीति पवमाना यदेवं तास्तुतयास्तानि छिद्राणीत्यथाप्यन्तरेण पवमानांश्चावर्त्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति वामदेव्यं मैत्रावरुणसाम सर्वत्राभिरूपं तदपचारे तल्लिङ्गीयाश्चिकीर्षेदथैतानि तार्त्तीयसवनिकानि रूपाणि स्वादुमत्यो

मधुमत्यो मध्वस्वत्यो विशुवत्यश्विवन्नत्यः सूर्यवत्यो दक्षिणावद् . योनिदूतवच्च वृद्धवच्चोकथेष्वथ नार्मेध-स्तोत्रीये वदति ककुप् प्रथमा योषिणाथ पुर उष्णि-गनुष्टुबिति ककुबेव प्रथमोष्णिग्द्वितीया पुरउष्णिक् तृती . दाशतयेनाध्यायेन तां बह्वृचा अधीयते युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे इन्द्रवाहा वचो युजेति तत्र वयं चत्वार्यक्षराण्युपाहराम: स्वर्विदेति सानुष्टुब् भवत्युपरिष्टाज्ज्योतिः ॥ ११ ॥

कथ नु षोडशी ज्योतिष्टोम इत्यकर्त्तव्य इति गौतिवृत्तिरन्तरितः ब्राह्मणसंमाम्नायेनेति कर्त्तव्य इति गौतमः षोडशिनः स्तोत्रे दयेति हि भवतीत्य-थापि न आर्षेयकल्पो दर्शयति द्वादशाहस्य षोडशि-मन्तावंतिरात्रावित्यथापि मन्त्रवर्णो भवति त्रीणि ज्योतींष्यपि सचते स षोडशीति निरूपेतो द्वाद-शाहो भवतीति वैतद्भवति संख्या मप्यस्यैतां विद्यमानां मन्य इति गौतम एवं च रहस्यब्राह्मणे दर्शयत्यथ तेन षोडशिसंस्थेन यजेतेति नाहास्यैषा संस्था विद्यत इति शाण्डिल्यो ऽतिरात्रे तु कृताकृतो-भवत्येव मित्राध्वर्युब्राह्मणं भवति नोक्थ्यो ग्राह्यो *

* "नोपग्राह्यो"—इति क ।

ऽतिरात्रो ग्राह्य इति सन्धी इमौ भवत इति धान-ञ्जय्य उदयसन्धिरसावस्तमयसन्धिरपोतस्माद्यः कश्चा-तिरात्रः षोडशिमानेव स कुशलेनेति तस्यैता ऋचः पञ्चविꣳशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादा नवो-पसर्गाक्षराश्चादितस्त्रयाणां पादानां त्रीणि त्रीण्यु-पसर्गाक्षराणि प्रादान्तेषु भवन्ति ते ऽष्टाक्षराः सम्पद्यन्ते पञ्चाक्षरावुत्तरौ दशाक्षरावेकस्तास्चतु-स्त्रिꣳश दक्षराः सम्पद्यन्ते न स्या उपसृष्टाः कनो विद्या मे तीर्थꣳ ह्येव वय मधीमहे तथा बह्वृचा इति ब्राह्मणेनेत्याहुस्चतुस्त्रिꣳशदक्षराः सꣳस्तुतो भवती-त्यनुपसृष्टः कनीयानितीवैतद्भवत्यथाप्युप्रोयमाणेषू-सर्गाक्षरेषु नेवार्थो हीयते न वृत्तिदुष्यत्यथापि शश्-देना अनुपसृष्टा आथर्वणिका अधीयतेऽथापि जिह्वा-रिताना मुपसर्गाक्षराणां वदत्यꣳ वा एता एकपद्या स्त्र्यक्षरा विष्णोश्छन्दो भुरिजः शक्वर्य इति चाक्षरा ह्यपि भुरिजो भवन्तीति तस्यैतद्गौरिवीतं गायत्री सामाभ्यासानुष्टुभꣳ राचा समानभागः समान-भणो भवतीति स यद्गौरिवीत्य इमा ऋचो ऽस्वयोनिं कुर्वत ऋषिः स्वयोनिर्भविष्यन्तीत्येतेन सौभरना-मधे व्याख्याते रेवतीषु च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमोत्पाद मेव षोडशिनं ब्रुवते तच्च चास्य ब्राह्मण मधीयते ऽथापि कथ मेवं कृत्स्नं कर्मान्त मन्तारयिष्यदिति चतुर्थोत्पाद वयं तच्च चास्य ब्राह्मण मधीमहे ऽथाप्याहैकविंशायतनो वा एष यत्षोडशीति तदेकविंश मह्नर्भवत्यथा प्याह द्वाशन्तय्य ऋचो चातुरुत्तरं छन्दःक्रमे वा एवंविध मुत्पद्यते न प्रथमकृतावित्यङ्गो भवतीत् . रात्रेरित्यङ्गो भवतीत्याहुरहवर्जं चास्य हविर्भवत्यथापि नियुक्तधर्मा भवति निवर्त्याङ्क्लिप्तवांग्रहवान्यथाहरेवं रात्रेरित्यपरं रात्र्या समानभागः समानभक्तो भवतीति तौ खल्विमौ द्वौ सम्यौ भवतस्तयोरसौ नित्यः कृताकृतोऽयं कस्य हेतोरिति साह्न तेन रात्रिः पञ्चदशविधतां लभते.कृतं पञ्चदशविध मह्नरित्यथापि न त मुहृत्य पराक् स्तोत्रं रात्रावलप्स्यत कृतान्यचैन्द्राण्यथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते कस्मात्तु तस्य न विद्यते पराङ्तस्यां वेलायां सादित्यो भवति नोपरां न स्तुतिर्विद्यत उदाहरन्ति त्वेव परां च स्तुतिं हिरण्यस्तूपे भवत्यस्यारेवः प्रति दोषं गृणान इत्यथ खल्वाहं शक्करीषु षोडशिना स्तुधीतेति तच्चैके महानाम्नीः प्रति-

यन्त्येताः शक्वर्यो भवन्तीत्येतास्वेव शक्वरीप्रवादो भव-तीत्यपर मेतास्वाधिकृता भवन्तीत्योङ्कारो विशेषः श्रुतः सर्वसामसु आदित्वेके स वाचा रथंन्तरेण निर्वर्त्तेत यथा त्र्यंस्त्रिᳪशं तृतीयसवन मित्यभि-परीत्य प्रत्यपकर्षस्तादृश मेतद्भवति समुच्चयो वा नानार्थत्वात्प्रस्तावशान्त्यर्थो हि वागुद्गीथादिशान्त्यर्थ ॐकारो वाक्पूर्वा स्यादेवं यथान्तरप्रत्यासत्तिरुत्तरा साजघन्यविधेराचाराच्च ॥ १३ ॥

॥ इति निदानसूत्रे द्वितीयः प्रपाठकः ॥

॥ अथ तृतीयः प्रपाठकः ॥

अथ का प्रथमा सᳪस्थेत्यग्निष्टोमो प्रथमा मन्य इति शाण्डिल्यः प्रथमाᳪ ह्यत्र स्थानं भवत्यथापि प्रथमं मधीमहेऽथाप्यग्निप्रमुखानि भूतानि भवन्ति परोव-रीयाᳪसंथाप्याह यज्ञमुखं मग्निष्टोम इत्यथाप्येतया सᳪस्थया चरत्यथाप्येषा समारब्धतमा भवतीत्यथापि नाग्निष्टोम मकृत्वापरे सᳪस्थे करोति न ह्यनु-

पादाय प्रथमा मुत्तरयोः सिद्धिरस्त्वनुपादाय, उत्तरे प्रथमां सिध्यतीत्यथाप्याह प्रजापतिर्वा एषा सᳲ-स्थानां यदग्निष्टोमस्तां यदकृत्वाथान्यां कुर्यात्प्रजापतिरस्य हिᳲसितः स्यादिति यावदादेश मुत्तरे सर्वत्राथाप्यूर्ध्वाना मेव सᳲस्थानां कृतानां वदति देवा वा अग्निष्टोम मभिजित्योक्थानि नाशक्नु-वन्नभिजेतुं देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नु-वन्नभिजेतु मित्यथापि नैतद्देवताः प्राहू राका सिनी-वाली सरस्वती विष्णुरिति सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतं स योऽयं देवताः शᳲ-शिषस्ता अपातिरात्रे सती हैव प्र व्याहृत्य शᳲसती-त्युक्थं तां प्रथमां मन्य इति गौतम एवं प्राप्नाह-र्मासासमानि सवनान्यपुरोद्रियन्त आभिवच्छन्दाᳲस्यनु विधीयन्ते प्रस्थितग्राह्या ग्रहैश्च शस्त्रैश्चापाह मेत मेव मार्गूस्तिन मिव मन्ये यो ऽग्निष्टोमयाजीति ध्रुव मनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्वि-जानीम इति ॥ १॥

अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः कृत्स्नं पूर्वं कर्मापरोपान्दायाः इत्यथापि स मिमीत एषा वा अग्निष्टोमस्य सम्मा यद्वात्रिरेषा वा उक्थ्यस्य सम्मा

यद्रात्रिरिति कुतो दृष्टेन प्रमा स्यादित्यथापि वः स्तोमसमाम्नायः प्राहातिरात्रस्यैव स्तोमसमाम्नायो भवत्यथापि न उक्थ्यसमाम्नायः प्राहातिरात्रस्यैव प्रथमं मुक्थ्यानि समाम्नामोऽथापि न कर्मणो यज्ञ सन्धिं * प्राहुरुपरि सन्धिभवात् स्तोमविमोचन मधीमहे यन्नून मन्त्या प्रथमा संख्या भविष्यत्यान्तरं स्तोमविमोचनं समाम्नायदित्यथापि शश्वद् बह्वृचा अतिरात्री मेव प्रथमम मधीयते तासां काम्या का सर्वाभिप्रायेत्याग्निष्टोमौं चातिरात्रौं च ब्रुवते शौचिवृक्षाः सर्वाभिप्राये अनवधारितकामे भवत इत्येकस्मा अन्यो यज्ञः कामायाक्रियते सर्वेभ्यो ऽग्निष्टोम इति न काम मवधारयति ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति नैव कामं मवधारयति पशुकाम उक्थेन स्तुवीतेति काम मवधारयति सोऽशिथिला परिसंस्थिता भवतीति सर्वाः सर्वाभिप्रायाः सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यस्तथा गौतमधानञ्जय्यौ सर्वाभिप्रायः खल्वयं ज्योतिष्टोमः स सर्वाभिरेव संस्थाभिः सर्वाभिप्रायो भवतीति यद्वेतदवधारितकामेति पश्यामो वै वयं सर्वाभिप्रायेषु

* 'कर्मणी यज्ञषि''-इति ख।

काम मवधार्यमाणं यथोपवती ग्रामकामस्य प्रतिष्ठाकामस्य रथन्तरꣳ सन्निधास्यामीति॥ २ ॥

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति प्रतिपद् गायत्रं त्रिणिधनं विष्टुतिर्ब्रह्मसामोक्थ्यप्रगाथः सन्धिसामेति तेषां किं काम्यं किꣳ सर्वाभिप्राय मिति प्रतिपद्यात् खल्वस्य ज्योतिष्टोमस्य चरति तत्सर्वाभिप्राय मथ यत्काम्यं निवर्त्तते तत्कामप्रतिपत्सर्वाभिप्राया सर्वा ह्यवधारितकामा भवन्तीत्युपवतीत्याहुः प्रथमाञ्चैना मधीमहे ऽपि तां ग्रामकामस्य ह ग्रामः सर्वाभिप्रायो भवतीत्यथापरस्याश्चिरं दर्शयति ततश्चतुर्षु मासेषु शुनाशीर्यस्य लोके ज्योतिष्टोमोऽग्निष्टोम उपवती प्रतिपदित्येका रथन्तरपृष्ठे ऽग्रियवती बृहत्पृष्ठे ऽग्रियवद् बार्हतं ह्यप मुपवती रथन्तरे ऽग्रियवती बृहतीति च भाल्लविना मथापेरनाꣳ साह्नस्योत्तमे स्तोत्रीयस्योत्तमां दर्शयत्योभयसाम्यास्तां न प्रथमां ब्राह्मणेनैव तद्व्याख्यात मथापराह्णाभिषेचनीये यत्पञ्चस्य वाचो अग्रिय इति तेन यज्ञमुखान्नयन्तीति प्रकृत्या प्रग्रयं दर्शयति तदपि शश्वद् ब्राह्मणं भवतोते नाव प्रतिपदौ सर्वाभिप्राये यदुपवती चाग्रियवती च कामाय वा

इतरा आह्रियन्त इति स्वरो गायत्रीविधनानां प्रथमा(३*) विष्टुतीनां श्यैतनौधसे ब्रह्मसाम्नां षड्ढक्थानि सर्वाभिप्रायाणि भवन्ति साकमश्वं सौभरनार्मेधे हारिवर्णीद्धृश्रीये आष्टादंष्ट्र मिति तेषां कान्युक्थे कान्यतिरात्र इति सर्वेषां यथाकामीति शाण्डिल्यो हारिवर्णीद्धृश्रीये वा हारिवर्णाऽष्टादंष्ट्रे वोक्थान्ते कुर्यादिति गौतमो ऽतिरात्रे सौभरनार्मेधे तच्चर्यां जानीमो हारिवर्णीद्धृश्रीये वा हारिवर्णाष्टादंष्ट्रे वोक्थान्ते चैव कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनार्मेधे वोक्थान्ते न कुर्यादिति रथन्तरं सन्धिषाम्णाः सर्वाभिप्रायं तद्विचरति तत्र यानि कामावधारणानि सर्वाभिप्राये स्तुतानि भवन्ति तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यादेवं चाव्याहतः क्रतुर्भवत्यपि चैव मार्षेयकल्पो दर्शयति ॥ ३ † ॥

अथानुष्टुभस्य भागस्य का छन्दोभक्तिरित्येकाक्षरां ब्रुवते शौचिवृक्षास्तद्विजानीमो बह्वक्षरप्रवादो भवत्येकाक्षरा वै वागक्षरेणान्ततः प्रतिष्ठाप्य मक्षरं क्षरतः मक्षिष्यत इति हि भवतीति सर्वैव

* पुस्तकेऽत्र छेदो नास्ति।

द्वात्रिंशदक्षरेति शाण्डिल्यस्तथा गौतमधानञ्जय्या-
वेता मनुष्टुबित्याचक्षते ऽथापेरना मनुष्टुबर्थे निधी-
यमानानां पश्यामो ऽथापि यस्तावदकुशलं छन्दसा
मौकथिक मनुष्टुभं पृच्छेदेता मेव द्वात्रिंशदक्षरा
माचक्षीत तत् खलु गायत्रं प्रातःसवनं त्रैष्टुभं माध्य-
न्दिनं सवनं जागतं तृतीयसवनं यदूर्ध्व मुकथेभ्य
आनुष्टुभः स भाग इति कथ मु द्वादशस्तोत्र-
आनुष्टुभो भागः स्यादिति सवनानि प्रति प्रविष्ट
इति गौतमो ऽष्टाक्षरा गायत्री हिङ्कारो नवम एका-
दशाक्षरा त्रिष्टुब् द्वादशाक्षरा जगती छन्दोभिरेवा-
नुष्टुभ माप्नोति यजमानस्यानवलोपायेत्यन्तस्यान
एष भाग इति शौचिवृक्षिरेकविंशस्तोमो वाक्सा-
मान्त एष नूनं द्वादशस्तोत्रस्यानुष्टुभो भागः
स्यादिति सर्वैव षड्विंशदक्षरेति शाण्डिल्यस्तत्रैव
यत्तत्त्वसर्यक्षराण्युपाहरति परोभौचिकीर्षन्निति षट्
प्रत्यवरोहं शौचादिरयो यथैतद् ब्राह्मणं द्वाद-
शाक्षर मेकादशाक्षर मष्टाक्षरं वागः द्वाविंशीत्यथ
पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्ट इत्येव गौतमो
ऽच्छावाकस्तोत्रीये शौचिवृक्षा अथ षोडशिनि सर्वैव
चतुस्त्रिंशदक्षरेति शाण्डिल्यस्तत्र यद् द्वे अक्षरे

उपाहरति परोक्षीचिकीर्षन्निव्युपसर्गाक्षराणि शौचि-
वृक्षा दशाक्षरं पादं शौचाद्वितरेयो ऽथाग्निराचे
सर्वैव द्वौविंशदक्षरेति शाण्डिलास्तां यदभ्यासेन
करोति परोक्षीचिकीर्षन्निति वैतद्व्यस्तोचीये शौचि-
वृक्षाः ॥ ४ ॥

अथायं सन्धिरन्तर्भागं भवतीं३ बहिर्भाग मिति
बहिर्भाग मित्याहुः समाम्नेषु भागेष्वागच्छत्यथा पश्चा
छन्दसा भक्षयति बहिर्भाग मिवैव स तत इत्यन्तर्भाग
मित्यपरं का सा भक्तिर्या बहिर्भाग मितरथापि न
मुक्थैः सम्मिमीते ऽन्तर्भाग मुकथानि भवन्त्यन्तर्भागः
सन् किम्भागः स्यादिति गायत्र इत्याहुः समाम्नेषु
भागेषु पुनरुपक्रमे कोऽन्यो गायत्रवान् स्यादिति सर्व-
भाग इत्याहुः सर्वभाग पृष्ठं ह्यत्र रथन्तर मित्यानु-
ष्टुभ इत्यपरं रात्रानुबन्धतयेति क्रमे भवतीं३
समास इति क्रमे भवतीत्याहुः समस्तेऽक्षरे रात्रि-
पर्यायाः क्रमे सन्धिरित्यपि वा क्रमे रात्रिपर्यायाः
समस्तेऽक्षरे सन्धिरिति नैतदिह विज्ञायत इति
शाण्डिलायनो ऽमुत्र खल्वेतद्दशरात्रे विज्ञायत इदं
पदस्य स्थाने मिद मक्षरक्रमस्येदं वृद्धेरिदं समासस्येति
तत्र हि द्विभागाः प्रकल्पयन्त इति विज्ञायत एवेति

वाज्ञाः षट्स्थान्यहस्सवनानि क्रमे षोडशी तं सप्पभिविहारं प्रसत्येत मेवाक्षरक्रम मनु चिख्यापयिषन् वृद्धौ रात्रिपर्यायास्तानपाभ्यसत्यथ्याद्यात्यसामानो हि छन्दोमा इति तदपुाभयोः सन्ध्योः सतोरेत मेव सन्धिरित्याचचते समासादित्येतेन सर्वैकाहेषु सामभागा व्याख्याताः ॥ ५ ॥

अथ दशरात्रे कथं भागा इति याथाकामी भागाना मित्येकं आक्षरसत्येतैकभागथ मस्ति सर्वभाग मपि तु त्र्याहःश एवं भागाः त्युर्गायत्रः प्रथमस्त्र्याहस्त्रैष्टुभो द्वितीयो जागतस्तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशमं तदपरं व मिव ब्राह्मणं भवति प्रातस्सवनेनैव प्रथमस्त्रिरात्रः कल्पते माध्यन्दिनेन सवनेन द्वितीयस्तृतीयसवनेन तृतीयो ऽग्निष्टोमेन साम्नैव दशम महरित्यथापरं गायत्रं त्रैष्टुभं जागत मिति प्रथमस्त्र्याह एव मेव द्वितीय एवं तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशम मथापरं गायत्रं त्रैष्टुभं जागत मिति प्रथमस्त्र्याह आनुष्टुभो द्वितीयो गायत्रं त्रैष्टुभं जागत मिति तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशम मथापरं गायत्रं त्रैष्टुभं जागत मानुष्टुभ मिति प्रथमश्चतुरह एव मेव छन्दोमचतुरहो वहिर्भागं

पञ्चमषष्ठे इत्यथापरं पदस्थः प्रथमस्तोत्रो ऽन्तरस्तो द्वितीयो बृहद्विस्थस्तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशमं ते खलु शश्वद्वाक्पविनो भक्षानन्नु व्यूहन्ति जगती प्रातस्सवन मागमं तत्र जागतच्छन्दसा भक्ष-यिष्याम इति न वय मनुव्यूहामः सवनभक्तिश्छात्त्रा एव भक्षेषु स्म इत्यथ संवत्सरे चतुर्विंशं लुब्धभाग मिति शौचिवृक्षिर्गायत्रं वा स्तोमच्छात्त्रेण त्रैष्टुभं वा स्थानेन सर्वभागं वैकाह्यादित्यभाभिप्लवा ऐका-हिका वा स्तोमच्छात्त्रेण षाडहिका वा तन्त्रच्छात्त्रेण त्र्यहभागात्स्वरसाम्ना मानुष्टुभो विषुवाच्चातुर्थ्या-न्सर्वभागो वैकाह्यादिति ॥ ६ ॥

अथाहीनेषु द्विरात्राणां गायत्रं पूर्व महस्त्रिभाग मुत्तरं यत्प्राग् ब्रह्मसाम्नस्तत् त्रैष्टुभं ब्रह्मसामप्रभृति जागत माषोडशिनः षोडशिप्रभृति पर मानुष्टुभं त्रिरात्राणां गायत्रं प्रथम महर्जागतं द्वितीयं त्रैष्टुभं तृतीयं वैदत्रिरात्रे सर्वभागान्यहानि चतूरात्राणां गायत्रं त्रैष्टुभं जागत मिति त्र्यहे ऽन्तराहरे चतुर्थ मिति शौचिवृक्षिः समस्ते ऽन्तर इति गौतमः पञ्चरात्रे-ष्वन्तरान्तर्योरेव चतुर्थपञ्चमे इति शौचिवृक्षिः सम-स्तेऽन्तर इत्येव गौतमः षड्रात्रप्रभृतिषु दाशरात्रिका

भागा यावद्यावदभिप्राप्नुयुरथ यत्राहीन एकाहैवं-र्तंत सर्वभागास्तत्रैकाहाः स्युरित्येक आहीनिक-भागा यथास्थान मित्यपर मेतेनाहीनेषूपधीयमाना व्याख्याता अथ यदूर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भार्गपर्वणि सर्वभागा एव ते स्युरेतेन सत्रे-षूपधीयमाना व्याख्याता अहीनैकाहसमासा ह्यत्र सत्राणि भवन्ति ॥ ७ ॥

अथ सुब्रह्मण्यायां विचारयन्त्यृग् खल्वयं भवती३ सामेत्यृग्भवतीत्याहुर्ऋचि इवास्य नामधेयं सुब्रह्म-ण्येति सामेत्यपरं गीतं हि भवत्यथाप्याहुर्मन्त्र एव खल्वयं शिथिलो भवत्याह्वानार्थस्तस्येय मभ्यायियं स्यादित्यथाप्याहुर्नैवेय मृग् न साम सुब्रह्मैवेद मिति ब्रह्मणो भवती३ उद्गातुरिति ब्रह्मणो भवतीत्याज्ञ-रेतेन ह्यग्रे संयुज्यते ऽथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यादथाप्येवं सर्वाहोरात्रा वषट्कारि-ण्यो भवन्त्युद्गातुश्चाग्नीध्रः सम्पद्यत इत्युद्गातुरित्यपरं गीतकारी ह भवति स गच्छभक्तेभ्यः पुरास्य भक्तेभ्यः कर्म प्रवृज्यत इत्यथैतानागतत्वारकालादहीनेषु सत्रेषु याजमानान्नामग्राहः किमर्थं इत्युच्चावचचरणास्त्रियो भवन्ति स इह देवसाक्ष्ये च मनुष्यसाक्ष्ये च येषां

पुत्रो भविष्यामि याᳫँश्च पुत्रानन्वख्ये ते मे पुत्रा भवि-
ष्यन्तीति शाकटी मन्त्रवरुह्याह्वयेद्राज्ञो ऽप्रत्यारोहा-
यांप्रत्यारोहाय ॥ ६ ॥

अथातो दशरात्रस्तस्य ब्राह्मणमेव द्रव्यसमुद्देश
उक्तो यानि चैतानि ज्योतिष्टोमानि द्रव्याणि यानि
च पृष्ठैः समानरूपाणि यानि च दशरात्रेण समान-
सङ्ख्यानि यथैतत्प्रथमानि प्रथमद्वितीयानि द्वितीय
इति स्थानतोऽपि समानᳫँ द्रव्यᳫँ सम्पश्येदथैताः
सप्त नाम विभक्तयः स तं तेन तस्मै तस्मात् तस्य
तस्मिन्नित्यामन्त्रिता ऽष्टमी स खलु विभक्ति मामन्त्रितां
प्रथमेऽहनि करोति कस्य हेतोरिति प्रत्यक्षभक्ति रेथ-
न्तर मामन्त्रितस्य न परोक्ष मस्तीत्यथाप्येषा प्रथ-
माग्निमन्थनीया भवति तां चतुर्थे ऽहमि करिष्यन्
भवति त मिति द्वितीया तां द्वितीये तेनेति तृतीया
तां तृतीये तस्मा इति चतुर्थी तस्या न द्रव्यं विद्य-
मान माङ्गरेका :मुदाहरन्ति प्रतवासीं नवासीं
धीति मग्नय इति सैषा प्रत्नवती भवति भागान्ते
ऽपरूपा स इति प्रथमा तां चतुर्थेऽहनि करोति कस्य
हेतोरिति प्रत्यय एष भागानां प्रत्यय एषा विभ-
क्तीनां प्रत्यये प्रत्यय मथापि मामधान्येषां भवत्येतस्मि-

न्नहन्यग्निं जनयन्ति जातस्यो नाम धीयत इति तस्य ब्राह्मणं भवति देवा वै श्रिय मैच्छं(ं)स्तान्न प्रथमेऽहन्य-विन्दन्न द्वितीये न तृतीये तां चतुर्थेऽहन्यविन्दन्निस्येतां श्रिय माह नामधेयं ह विभक्तय: श्रिता भवन्तीत्यथा-प्येषा द्विसं(ं)शया पञ्चमे ऽहनि भवति तस्येति वा तस्मादिति भवतीति गौतमस्तां(ं) शश्वदेके चतुर्थीं ब्रुवते तां ततो नामधान्या प्रच्युता मन्यतरस्मिन्नहन्य-नुगृह्णाति तदपैव मिव ब्राह्मणं भवति तेनो श्रीः प्रत्युपोदितेति (नैव*) ब्रह्मणा आज्ये निरुच्यत इन्द्रा-त्परि तन्वं मम इति तस्मादिति तस्येति भवतीति धानञ्जय्यः सा षष्ठी ता मामन्त्रितया प्रच्युता मिहा-नुगृह्णात्यथाप्रेतयोः पूर्वयोस्तृतीयया समानं द्विव-चनं स तयैव ते उपाप्ते अमं(ं)स्तापि वा प्रत्यवरोहार्थ एवाकरिष्यत्समूढाज्ये निरुच्यते ऽग्ने स्तोमं मनामहे सिद्धमद्य दिवि स्पृशो देवस्य द्रविणस्यव इत्यभविष्य-दित्यथापि व्यूढाज्य एव भवति तव श्रियो वर्ष्यस्येव विद्युत इति त्वच्छ्रियत इत्यभविष्यदित्यामन्त्रितैव षष्ठे भवत्येवमाध्यवसानसभाधिरिति ॥ ९ ॥

अथैषा स्वरविभक्तिरौशनं प्रथमे वासिष्ठं

* नैव पदं ख-पुस्तके ।

द्वितीय उभयतःस्तोभं गौतमं तृतीय आभीशवं चतुर्थ आनूपं पञ्चम इहवद्वामदेव्यं षष्ठे ऽथैषा निधनविभक्तिर्नौधस प्रथमे श्यैतं द्वितीये मत्त्वावैष्टम्भं तृतीय आथर्वणं चतुर्थे बार्हद्गिरं पञ्चमे गौष्ठः षष्ठे ऽपैराषिड्डाविभक्तिः कालेयं प्रथमे माधुच्छन्दसं द्वितीये रौरवं तृतीये पृश्नि चतुर्थे शायोवाजीयं पञ्चमे गौष्ठ एव षष्ठे ऽथैषा छन्दोमेष्विडाविभक्तिर्जराबोधीयं सप्तम इडानां सङ्कारो ऽष्टमस्य सतो नवमे ऽहनि क्रियते प्रतीचीनेडङ्काशीतं नवम उद्वंशीयं दशमे ऽथ नौधसे वदन्तीन्द्रङ्गीर्भिर्हवामह इति तत्खलु हवामह इत्येव कर्त्तव्यं विधिप्रमाणाः कथ मयथाविधि कुर्यामित्याम्नायवद्वैतेन ब्राह्मण मुपवर्णयतीत्यपरं तन्नियोगाय न प्रभवतीत्येतेनैतद्व्याख्यातं मक्रान्तसमुद्रः परमे विधमन्निति यानि चैवञ्जातीयान्यथाचारे वदन्ति यः पुरा पुण्यो भूत्वा पश्चात् पापीयान्त्स्यात्तदाचारं ब्रह्मसाम कुर्वीतेति किं तस्य स्थाने स्यादित्येते एवान्योन्यस्य* स्थानं व्यतिहरेन्नौधसमुष्णिहि कुर्यादिति तदाहुर्यातिहरति चेद्यन्न बृहत्षोडशिसाम स्यान्नौरीवितं नून द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ वै सञ्चारये-

* "स्यादित्येते वान्योन्यस्य"—इति ख।

दिति * सञ्चारयति चेद्गौरीवित मेवानुष्टुभि कुर्या-द्गौरीवितᳬ षोडशिसामेत्यथ वै प्रतिनिदध्यादिति प्रतिनिदधाति चेद्यत्र बृहत्षोडशिसाम स्यात् किं तत्र बृहत्सदृशं द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ कयᳬ स्यादिति सञ्चारयेदहर्नानाहास्तु यानि सञ्चारि-धर्माणि स्युः प्रतिनिदध्यात् समानेऽहनि व्यतिहरेद्यत्र व्यतिहार मभिरूपं मन्येत प्रतिनिधिस्त्विहाभिरूप-तरः पौष्कल मुष्णिहि कुर्यादेतत्र ज्योतिष्टोमानां द्वयाणां दशमेऽनिहितं भवत्यपि च पदनिधनᳬ रथन्तरेऽहनीति श्यावाश्वायज्ञीय मग्निष्टोमसाम गच्छे यच्छे कुरुतेति तदेवाभिवदत्यथापेरष तृतीयसवनᳬ सामान्तस्त मदिदर्शयिषीत् ॥ १० ॥

अथ वैरूपे वदति यथा मण्डूक आट्, करोत्येवं निधन मुपयन्तीति कस्येदं ब्राह्मणᳬ स्यादिति कृता राथन्तरीडाकृता बार्हतीति कौत्सस्तदिद मकृत-कारं ब्राह्मण मद्दिडाब्राह्मणᳬ स्यादिति पञ्चमेऽहयं प्रत्याहृता भवतीति गौतमस्तां परोक्षीकृत्याभि-व्याहरेयु रेवं पञ्चमेऽहन्ययातयामा भवतीति तद्-पेरव मिव ब्राह्मणं भवत्ययातयामताया इति तत्र

* "सञ्चारयीति" ख।

कः परोक्षीभावं इत्याकारटकारौ वा कुर्युरिकार-गाकारौ वैव मेकवर्णविकार इकारन्त्वेवायिकारौ-कुर्युरेतस्मिन् परोक्षीभाव उपलभ्यत इति पदद्वैवतं व्यत्ययति वैरूपे विरूप मचिकीर्षदवर मेवेद मङ्ः सत्पर मभ्यस्तं भवतीत्यपरं वात्यासे वात्यासं करिष्यामीति स्तोत्रवशेनेति धानञ्जय्यो यदवात्ययन् यद-द्वैवतं पदा यत् प्रतिहारयिष्य इतिप्रत्यवेतस्तथा प्रति-हारो ऽभविष्यद्यद्यु वै दैवतायै बर्हिर्ऋचं प्रतिहारो ऽभविष्यदथेत्य मनतिप्रत्याहृतोऽन्तर्ऋचं भवतीत्यथा-प्यथैतं छान्दस मध्यायं विद्यमानं माहुरप्यथ खल्वाहु द्वादश वैरूपाणि भवन्तीति कश्चेदं ब्राह्मणऽ स्यादिति संवत्सरब्राह्मण मित्याहुः संवत्सरे द्वादशकृत्वो ह्यातृषाम भवति तस्येदऽ संवत्सराग्नि वदेदिति ॥११॥

अथ प्रमऽहिष्ठीये वदन्ति हिऽसितो ऽन्वीक्षेत य मिच्छेत्प्रसज्यमानं ( न * ) प्रत्येयादिति त मनुगा-येद्विक्षा मन्विति कुर्य्यं सर्वां सकाप्युदृक्षाशायं न प्रत्येयादिति काकुभ उक्थः प्रगाथः पृष्ठच्छन्दो-ऽन्वभिवृद्धि रथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानु-पूर्वां विवदन्ते स्वःपूर्व मिडोत्तरं त्येके एव मेतयोः

* ख पुस्तके एतत् पदं नास्ति ।

सामान्तरयोरानुपूर्व्यं भवतोऽर्वां वयं पूर्वां कुर्म एव मनयोः समाम्नोपायाद्भिवाहारं पश्यामो यथा राजने माधुच्छन्दस इत्यत्र वैराजं त्वानुतोदं मेके कुर्वन्त्येवं छान्दसोऽध्याय इति चतुरनुतोदं वय मेव माचार्यवच इति तेन वात्सप्रं समादध्याद्यदीदं त्वानुतोदं तद्यदि चतुरनुतोदं तदपेरवं स्मिन् ब्राह्मणं भवत्येतस्मिन् वैराजं प्रतिष्ठित मित्यथ कतमे विष्टम्भा इति देवता इत्याहुर्देवताभिः पदानि विष्टम्भानीति तं दाक्र रेकादशेमा देवता दशकृत्वो विष्टम्भातीति दशैताः सत्यम्प्राया भवन्त्यपि वा य एते देवतान्तरेषु दशस्तोभास्तान् विष्टम्भानवोचत्तैर्देवताविष्टब्धा इत्य- थैतयोरक्षरयोर्विवदन्त ऋगक्षरे स्तोभाक्षरे इत्यृगक्षरे इति लामकायनस्तदभिव्याहारेण जानीमो यादृशे इमे ऋगक्षरे तादृशे इमे भवत इत्यथापराादित्यसदृशं वैराजं यादृश इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिषन् प्रथमे ऋगक्षरे अन्त परिहरत्यथापुरा- श्वावचाः सामवृत्तयो भवन्ति यथैकवत्साभ्युपेतानि पुनरारब्धानीति नान्यां मन्येत स्तोभाक्षर इति धानञ्जय्यः पश्यामः खलु पदानुरूपान्स्तोभान्वचो- वावयन्तो यथैतज्जनदृश्या ऋचि जनद्रान्स्तोभी

ऽप्रसिद्धवतोऽपि राज्ञोऽन्नोष्वेव मिमे पीतवत्या ऋचि पीतवत्ता स्तोभाक्षरे भवत इत्यथाप्यादित्यसदृशं वैराजं यादृश इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिषन्यदानुरूपे स्तोभाक्षरे अन्तं परिहरति नो एतत् कारन पश्यामः प्रथमे ऋगक्षरे अन्त परिक्रियमाणे इत्यथैषाति जगती भावप्रत्यये छन्दस्तोमरोह मद्दिदृक्षयिषोर्द्विराजं वा वैराजे ऽन्यचिकीर्षोर्द्विराडियं पञ्चाशदक्षरा बृहत्यावुत्तरे तेन बृहतीभ्यो ऽनपेतं भवतीत्यनपेतम्भवतीति ॥ १२ ॥

अथैतासु महानाम्नीषु विप्रतिपादयन्ती दशाक्षर मिद मशाक्वर मित्यशाक्वरी प्रथमा द्विपदा शाक्वराणि त्रीणि पराणि पदानि धातुरशाक्वरः पञ्चाक्षरः स एष कृत्स्नकृतो भवति वर्णो शाक्वरो ऽष्टाक्षर ऊधः शाक्वर मष्टाक्षर मभ्यासवत्तस्य द्व्यक्षरान् पादादीन् प्रतीतोदा इत्याचक्षीति पुरुषे, शाक्वरः पञ्चाक्षरः शाक्वराण्येव त्रीणि पदान्यभ्यासो शाक्वरोऽष्टाक्षरस्तस्य प्रस्तावयति न प्रतिहारयत्येते नैत्योत्तरयोः शाक्वराणि चाशाक्वराणि च व्याख्यातानि द्व्यभ्यासोत्तमा शाक्वरी भवत्यभ्यासा किमर्था इति लोकोक्ताः शक्यैः साध्यासा इमे लोका भवन्त्यग्निर्वायुरिति पूर्वयो-

रादित्यश्चन्द्रमा इत्युत्तमस्य तस्माद् द्व्यभ्यासोत्तमा शक्करी भवत्यथ खल्वाह व्यौपशाः सᳬस्तुता भवतीति कस्येदं ब्राह्मणᳬ स्यादित्युत्तमाया द्व्यभ्यासाया इत्याहुरेकाभ्यासि पूर्वं द्व्यभ्यासोत्तमा तस्या इद मभिनन्द ब्राह्मणं वदेदित्यपि वा समस्तब्राह्मण मेव स्याद् व्यौपशोत्तमेत्यूधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्य एव मिव ब्राह्मणं भवतीडे अमितो ऽयकारं तस्माच्छुङ्गेतोज्यायसी स्तूयादित्युपशोतानि शृङ्गाणि भवन्तीत्यथ खल्वाह दिशः पञ्चपदा दाधारत्तून् षट्पदा छन्दाᳬसि सप्तपदा पुरुष द्विपदेति प्रतिलोमं वदति * वादतश्चिद्रोहो भविष्यतीति सप्तपदा प्रथमा शक्करी षट्पदा द्वितीया यज्ञि प्रथमाया उत्तमं पदं तद् द्वितीयायाः प्रथमं प्रगाथः सानुपृष्ठ मिति पञ्चपदोत्तमा यद् द्वितीयाया उत्तमं तत् तृतीयायाः प्रथमं च द्वितीयं च नवपदाः पुरा बभूवुरिति लामकायनस्ताभ्यो रेवत्यो निर्मिता ऽ प्रथमायाः पदे त्रीणि द्वितीयायाश्चत्वारि तृतीयायास्तदप्येव मिव ब्राह्मणं भवति सिमाभ्यो ह्यधि रेवत्यः प्रजायन्त इति नवपदा एव भविष्यन्तीत्यूधश्चाभ्यस्य पदं चानु-

---

* "भवति"-इति ख।

सꣳहरत्यथापि नवपदा एताभिरूपतरां न विपर्यये त्रिणव इति ॥ १३ ॥

॥ इति निदानसूत्रे तृतीयः प्रपाठकः ॥

॥ अथ चतुर्थः प्रपाठकः ॥

अथ खल्वाह गायत्र मयनं भवति त्रैष्टुभ मयनं भवति जागत मयनं भवतीति किमयनꣳ स्यादित्यूधसि विकारो दृष्ट इति गौतमधानञ्जय्यौ य एष मध्य ऊधसो ऽथकारस्तꣳ स्वरिति कुर्यात्तद्गायत्र मयन मथेति त्रैष्टुभ मिडेति जागतं तदाहुर्विकृतो ऽथकारो ऽविकृतस्थ को विकारो ये चाभित इडेति विकुर्यादिति सर्व मेवोधर्विकारार्थ मागच्छतीत्यपरꣳ सर्व मेवोधर्विकुर्यादित्यथाप्याहुरविकृत मेवोधः स्या दन्त्येडा मेव कुर्यादन्तांस्वरानि कामीतीत्यथापराहुरविकृतैवान्त्येडा स्यादादेव प्रागन्त्येडायास्तद्विकुर्यात्तद्गायनं भवतीति ते कथमेतोजागत मयनꣳ समारप्स्यन्तेति नेदं जागत मिति शाण्डिल्यायनो यानि

त्वच्च निधनानि तानि स्वरिति कुर्यात्तद्धायन्न मयन मपेयक्ति त्रैष्टुभ मिडेति जागत मपेदं मिश्रणिधनꣳ सर्वामिंप्रायं यथेद मधीमह इत्यूर्क्ष्ꣳ शक्वरीभ्यः पञ्च पुरीषपदानि पञ्चाक्षराणि तेभ्यः प्रस्तावयति न प्रतिहारयति न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारोपायान् "प्रस्तावोपेथादिति" प्रस्तावयामो वय मन्यदिदꣳ शक्वरीभ्यस्तत्कथ मप्रस्तुत क्रियतेति सꣳरोधात्तु नून प्रतिहारोपेथात्ते खल्विमे बहवः प्रस्तावाः कथ ओङ्कार इति प्रस्तावनिमित्त ओङ्कार इत्येके प्रस्तावे प्रस्ताव ओङ्कारेणादद्दीताथाप्याह रसो वा एष साम्नां यदोङ्कारो नैतेनातिरेकोऽस्तीति प्रथम एवप्रस्ताव इत्यपरः स्तोत्रीयाया एतान्यङ्गानि भवन्ति सक्रन्नु खलु स्तोत्रीयाया ओङ्कारो भवत्यथापि परिचष्ट ऊर्ध्वं प्रतिहारादोङ्कारेणादान मथाप्येव मन्यैः सामभिः समाधिरिति ॥ १ ॥

ते खलु शश्वदेके पुरीषपदैः प्रतिपद्यन्ते पञ्चविधेन पञ्चमस्याङ्गः पृष्ठं प्रतिपत्स्यामह इत्यथाप्येवꣳ शक्वर्यवसानꣳ स्तोत्रं भविष्यतीत्यथाप्याह गोष्ठः पुरीष मिति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्त्यन्नातो वयं कुर्म एवं च छान्दसो ऽध्यायोऽपि चैवंपञ्च-

विधं पञ्चमस्याङ्कः पृ४ मनुसंख्याप्यत इति यद्दे-
तद्गोष्ठः पुरीष मितीष्टा वै पशून् गोष्ठं कुर्वन्त्यथापि
पश्चार्द्धसेवि पुरीष मिति तत् खलु सर्वाभिः स्यह्
स्यादित्याहुस्तृचदृष्टंय इमा भवन्ति लोकदृष्टयस्तद्दि-
दं मन्ते ऽनुषङ्गस्थाने समाम्नातं भवत्यथापैवं सर्वाः
सपुरीषा भविष्यन्तीति व्यवायश्चाभविष्यदतिगुरु चाथ
वै विष्टावान्तेषु विष्टावसमाधय इति व्यवायश्चैव
गुरु चाथ वै पर्यायान्तेषु पर्यायसमाधयं इति व्यवाय-
श्चैव गुरु चाथ वा उत्तमम. मेवानुचरेदेतया हि
संहरेत्पन्नं भवतीति व्यवायश्चैवं गुरु चं सकृदन्ततः
स्यादित्याहुरेतच्चासां लघिष्ठ मपि चैव मध्येऽन्नायो-
ऽथापि परिनिष्ठायाशिष मुदित्वान्ते ऽनुज्ञां वदिं
ष्याम इत्यथापि पश्चार्द्धसेवि पुरीष मिति तासां धर्मो
नियुज्यते न व्याहरेन्नाश्नीयादभिनद्वाचन्नासीत पूर्वे
कोऽयं ब्रह्मणो भवतिम्नन्नो ह प्रतिलभ्य प्रदद्देदेत
मेवाह ब्रह्मचर्यं धर्मं मन्य इति गौतमस्तत्त्वतिगुरु
चाभविष्यदपि च नो ह मरणाशङ्का मिमस्तु सर्वच्छ-
न्दसा मवन्त्यासां मे चरतः सर्वच्छन्दसा मिव व्रतं
चरितं भविष्यतीत्यथाप्याहुर्यानि रूपाणि ब्रह्मचारी
न पश्यति तान्यासन्नाम्नाति लब्ध्वा हैनांत्समावर्त्य

भवति त मेतद्रूपेभ्यश्च रसेभ्यश्च समन्नरन्ध्नमन्यत इति ॥ २ ॥

तासां खलु त्रीन्त्संवत्सरान् ब्रह्मचर्यं चरेत् कृष्णवस्त्रः कृष्णभक्ष आचार्याधीनस्तपस्वी तिष्ठेद्दिवाऽऽसीत नक्तꣳ सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थानमदद्वर्षति शरणं नातीयान्नित्यं स्निग्धवासा बुभूषेदुदकसाधनो हि महानाम्न्य इत्येवं खलु चरतः कामवर्षी पर्जन्यो भवत्युदकोपस्पर्शनं किमर्थमित्यनुक्ताः शक्वर्यस्ता एव प्रविशन्मन्यत इत्यपि वा पशूनामेव पायनार्थꣳ स्यात् पशूक्ताः शक्वर्य इति खलु प्रथमस्य स्तोत्रीया मनुगायाहोरात्रे वाग्यतः परिगाह्यात्र आसित्वा तस्याः संवत्सरं ब्रह्मचर्यं चरेदेवमेव द्वितीयायाः एवं तृतीयायास्ते खलु शश्वदेके प्रथमत एव परिगाह्यन्ति प्रथमत एव यथा न प्रवत्स्यतीत्यध्यास प्रत्येकेऽध्यास प्रत्यध्यासिष्यामह इति त प्रातरभिवीचयन्ति यान्यप्रवर्त्यं मन्यन्ते योऽग्निर्वत्स मादित्य मपोऽभिव्यख्य मित्यपोज्योतिर भिव्यख्या मित्यग्निं पशूनभिव्यख्या मिति वत्सꣳ स्वरभिव्यख्या मित्यादित्य मथाप्येतदेवैता भवन्त्याप इवाग्निरिव वत्स इवादित्य इवेत्यथ खल्वाह पार्थरश्मꣳ राज-

न्याश्च ब्रह्मसाम कुर्याद् बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्यायेति पार्थुरश्मं चेद् ब्रह्मसाम स्याद्बार्हद्गिरस्यैकच्चं कुर्याद्वियु वै रायोवाजीयं मेते एव बार्हद्गिरं रायोवाजीयं सतोबृहतीये अन्योन्यस्य स्थान व्यतिहरेत् कथ मुभयेषु समवर्षयेदिवति भुम्नो वशं नयेद्गृहपतेरित्येकेऽपि वा बार्हद्गिर मेव कुर्यान्नित्य ञ्च श्रैष्ठवर्णीयं चेति वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिक मुक्थस्तोत्रीयं प्रति निदध्यात्संस्थाराय वीङ्कस्तोत्रीये वसिष्ठस्यप्रिय मनुकल्पयेद् वसिष्ठस्यप्रिय मनुकल्पयेत् ॥ ३ ॥

अथ षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति तदेके प्रत्यक्षं ब्रुवत एतत्प्रकृतौ दृष्टं भवतीत्यथापि यद्रेवत्यः पृष्ठ मभविष्यत्पवमान आसां धर्म मकरिष्यन्नित्यथाप्यानुरूपाग्निष्टोमसाम्नि वारवन्तीयस्यैवानुरूपं कल्पयतीति रेवत्य इत्यौष्ट्राक्षी रेवती षष्ठानाऽं स्तुतिब्राह्मणं भवति तासां धर्मो नियुज्यते तद्गवां घोषोऽन्वसृज्यतेत्यथापि प्रतिपद्भिः पृष्ठानि संवर्णयन् रेवतीरेवाभि संवर्णयति षष्ठ च विश्वजिति चाथापि पृष्ठाल्लोमातं पृष्ठानि च्यावयन् रेवतीरपि च्यावयन्त्यथाप्यनुगृह्णीतपृष्ठे रेवतीरेवानुगृह्णातीत्य-

थापि परोक्षपृष्ठोपाङ्गपृष्ठयोरनुगृहीतपरोक्ष इति बारवन्तीय मेवानुगृह्णाति यद्वेतद्देतत्प्रकृतौ दृष्टं भवतीति ब्राह्मणेनैव कारणं वदति यद्वेतत्प्रवमान आसां धर्म मकारिष्यन्नित्युपाप्तं पृष्ठत्वꣳ रतोत्त्रीयेण मन्यते यद्वेतद्वारवन्तीयस्यैवानुरूपं कल्पयतीत्युक्तं वारयन्तीयस्य परोक्षं तदेतद्रेवतीपरोक्ष मेव भवतीति ॥ ४ ॥

अथ खल्वाह प्रायणतो द्विपदाः कार्या३ उदयनता३ इति कथं प्रायणतः स्युरिति प्रथमेऽहनीत्याङ्गिरेतद्धि प्रायणं भवत्यथापि दृश्यते प्रायणीयस्योक्थत्वं चतुर्विंꣳशस्य तथा षष्ठस्याऽग्निष्टोम्यं यथाभिप्लविक द्वितीय इत्यपर. मेतदुक्. ानां प्रायणं भवत्यथापैवमुक्थ्यव्यतिहार सिध्यत्यथापैवं प्रकृतिसविधतरं भवतीति कतमावृत्ते पृष्ठ्य सꣳस्थाधर्मा इत्यावृत्तस्यापरान्त एव स्युरित्येके यथा षडहः सन्तिष्ठत इति हि भवतीत्यथापि षडहधर्मा इत्याचक्षते न चैतत् षष्ठस्य साध्रियो यथो च प्रथमस्य त्र्यस्त्रिꣳशस्य तेनैव संस्थाया मितराचार्या एतदावृत्तं रूपं य इत उपक्रम धर्मः स परस्तात्सꣳस्थाधर्मो यः परस्तात्सꣳस्थाधर्मः स इत उपक्रमधर्म इत्यथापि व एनानावृत्तस्यान्तं

परिहरेत्सर्वाण्येव नूनꣳ सोऽन्तलक्षणाभ्यांवृत्तशान्तं परिहरेदिति ॥ ५ ॥

नीर्णि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः पञ्चम मभितो द्वे षष्ठे पूर्व मेकं * तेषाꣳ सन्तानाय सन्तनीत्यनुपूर्वꣳ सूक्तानुरूपाꣳश्छन्दोमान् करोति पृष्ठ्यश्छन्दोमाबा मकृतकारायस्थापप्रक्रान्तवादः प्राक्-सूक्तानुरूपयतेत्यथापि प्रज्ञापयति सꣳस्तावेषु प्रजा-स्थान मभ्यवर्द्धयिषीद् बृहद्रथन्तरे पृष्ठे न हि षाडहि-कान्यनुभवन्ति नो खलु लुप्सीरथापि शिथिलोक्ताऽस्तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीत्यथापि तम उक्तास्ते एते ज्योतिषी सामाꣳ स कस्य स्तोर्बृहत्पूर्वं युक्त इति कृतयोः क्रियमाणयोरेषाकृतकृतिरथापि स्तोमप्रत्यवाये पृष्ठतो रोह मद्दिदर्शयिषीदंष्योक्तं बृह-दित्यथापीदं वृतस्यानः बृहदाम्नितया व्रतस्य मध्नस-तया ते व्यत्यासमप्रयुक्तो ... कुशलं वाङ्निधनानि माध्य-न्दिनान्यन्त्यान्यैडान्याभवान्त्यानि सवनच्छन्दसो रनुग्रहाय ॥ ६ ॥

अर्कपृष्ठान्येकेऽनीतो ऽधीयते मैषा छन्दोमानां पृष्ठभक्तिस्तेषां पृष्ठत्वे तिष्ठमानो न साक्षात् करोति

* "षष्ठादूर्ध्व मेकं"—इति ख ।

बृहद्रथन्तरे वा निकामयमानः पूर्वां चाभवे करोत्येवं नेदीयसि पृष्ठाना७ सप्तमे ऽहनि कृताकृतौ भवत्यब्राह्मणाविहितत्वाकर्त्तव्य इत्याचार्याश्छन्दोमानां चार्कसमाधिर्यथा चैतान्येङ्गिनो ऽधीयते छन्दोगाश्चापोन मेके ऽधीयते ऽथापि स७रोधे ऽनुगृह्यते यथा त्रिवृति दशरात्रे इति नवमे ऽहनि इमे स्तोमे सति साध्यासां बृहतीं करोति कस्य हेतोरिति साध्यासा पूर्वे ऽहनि कृता स एव मप्रत्ययवायो ऽथापि बहिर्धं चरति तस्याः पथ्यता मापिग्रादग्निषोहाग्रगात्रिकाणां इत्याणां पथ्याख्या ऽथाप्येतस्या मेवैत७ सामयोग७ साधीयोऽभ्यस्नुत इति चैककुभस्य निधने विवदन्ते पदनिधनाना मित्येके यादृशे इमे ऋगन्तरे तादृशे इमे भवत इति बहिर्णिधन मित्यपरं बहिर्णिधनस्थाने च युज्यते ऽपि चास्य निधनवादो भवति बहिर्णिधनाना मुत निधनवादा भवन्तीत्यथाप्यापद्यते ज्योतिर्विचारान्यत्पदनिधन मभविष्यद्युत परेच्यत ज्योतिष्टोमी भाज्ञा नास्य प्रतिनिष्कारं कल्पयति बहिर्णिधनस्येव सत इति सत इति ॥ ७ ॥

अथ दशमे ऽहनि चतुर्थ७ होतुराज्य७ समामनामस्तस्य मध्यमे भवतस्तानूनपाती च नाराशंसी

च द्व्यानि कुलानि भवन्ति. तानूनपातन्तांनूनपातेषु कुर्यान्नाराशꣳसीं नाराशꣳसेषु वसिष्ठशुनका अत्रयश्च वध्र्यश्वाश्चवक्रावाश्च सङ्कृतयश्चैतानि नाराशꣳसान्यथे-तराणि तानूनपातानीति कथं मुभयेषु समवय-तिस्वति भूम्नो वशं नयेद्गृहपतेरित्येके ऽपि वा तानून-पाती मेव कुर्यादेषा भूयिष्ठानां कुलानां भवत्यपि चैता मेवैके ऽधीयते ऽथाप्येषा समारब्धतरा भवतीत्यथ मानसं दशमस्य भवती३ सर्वस्याहो एव दशरात्र-स्येति दशमस्येत्याहुर्नैतद्दशमेन्नाज्ञा * विप्रयुज्यमाम पश्यामो ऽथापि दशमधर्मा इत्याचक्षते ऽथापि साह्नं मानसेन विराट् सम्पद्यतिसङ्ख्यात्यथाप्याहुः सर्व मेवेद मह्नः पुरा मानसं बभूव तद्दतिगुर्विति वाचꣳ समा-पादयाञ्चक्रुरेकस्तोत्रं चित्तं धर्म मनु अब्रुवन्तस्थात्रस्य-तीत्यथापि वागुक्ता मह्नः संयुक्ता मह्नः संयुक्ते वाङ्-मनसे भवत इति मे दशमस्येत्यपर मुपरिष्टात् पत्नी-संयाजानां भवति यन्नून दशमस्याभविष्यत् पुर-स्तात्पत्नीसंयाजाना मभविष्यदित्यथाप्यंच त्रिक स्तोमः कथं त्रयस्त्रिꣳशं कृत्वा समाने ऽहनि त्रिकं पर्य-वयिष्यदित्यथाप्यत्र गायत्रं छन्दः कथं त्रयस्त्रिꣳ-

---

* "नैव दशमेमाज्ञा"–इति ख।

अद्दशरा: कृत्वा समाने ऽहनि गायत्रं पर्यवृश्चिष्य-दित्यथापि वागुक्ता मह्यन्या वागभवत्त्वन्यस्तनो नाह्य भूयाहत्थमेनाक्ता सम्बन्धो यथा प्रथमेनेति कापटवः 'सर्वं वैतद् दशरात्रस्य सर्वो वैतस्य दशरात्र इति शाण्डिल्यायन आयामवाचं दशक्रमं मनोऽप्यायाम-वामसंयुक्तौ वाङ्मनसे भवत इति ॥ ८ ॥

तत्र गायत्रीः करोति स्थान गायत्रीणां यदि परस्थाक्षो गुर्ववेदं स्तोत्रं तत्र लघिष्ठं छन्दो चिकी-र्षीतायापेश्वमाद्यवसानसमाधिः प्रतिष्ठार्थो वाव गायत्रीः करोतीति तासु विवदन्त ऐन्द्र्यः प्राजा-पत्याः सारीरात्त्रस्थान्द्रमस्यः सौर्य इति शाकपूणि-स्तथा धानञ्जय्यः प्रत्यय आदित्यः प्रत्ययो मनः प्रत्यये प्रत्ययं तत्र गायत्रं करोति स्थान गायत्रस्य यदि परस्थाक्षो गुर्ववेदं स्तोत्रं तत्र लघिष्ठं सामा-चिकीर्षीदथापेश्वमाद्यवसानसमाधिप्रतिष्ठार्थो वाव गायत्रं करोतीति यज्ञायज्ञीय-गौरीविति-रथन्तर-वामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षते ऽथै-तस्मिन् अक्षोत्थे वदति भूयांसीव ह स्म शाण्डिल्यः प्रदिशति यदादोऽश्वत्रिरात्रे मध्योद्यं तदांप्रत्ययिष्य-द्यथा वैतद् ब्राह्मणा अभिमन्त्रं समुदाचरन्तीति

वरं मन्त्रं भवत्यन्तनिर्वचना आशिषं इति वृत्वा वरानौदुम्बरीं समभिपद्यन्ते सर्वकृतिं कृत्वा निस्वरिता इव मन्यन्तेऽत आत्मानमूर्जा प्रत्यापाययन्तो मन्यन्त ऊर्गुदुम्बर इति समाप्ते छन्दोव्यूहे सामव्यूहं कुरुत इति गौतमोऽकृतकारार्थस्वर्यास्तं अग्निष्टोमसामकरोत्युपवदिता छन्दोमानां नावसानेऽचिकीर्षीत्तथापि शिथिलोतोः प्रतिष्ठाक्त्य त्रयस्त्रिंशस्त मवसानेऽचिकीर्षीत्तथापि त्रयस्त्रिंशे क्रियमाणे त्रिके सापरात्ते त्रिंशतः स्तोत्रीयं दशम मह्नः सम्पद्यते सा विराडथापरं द्वादशं पञ्चविंशानह्नः सम्पद्यते नाहीनं साचादेकार्षं संस्पदा चिदेन मुपाप्नुयामेत्येतद्वयं शाण्डिलम् ॥ ६ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात्सषोडशिकां संसन्धिकां रात्रिं ब्रूहीति चतुर्विंशति माज्येभ्य आदत्ते द्वे वामदेव्याच्चतस्रः सौभरात्ते दश गायत्रास्तृचास्तान् रात्रे स्थाने निदध्याच्चतस्रः ककुभः सौभरात्तासां द्वितीयायास्तृतीयायाश्चतुरक्षरं चतुरक्षरमुद्धृत्य द्वे प्रथमाया मुपदध्या देवं स विराट्प्रथमो गायत्रास्तृचो वैतहव्यं स्तोत्रीयो ऽतिशिष्टानीतरस्यां ककुभ्युपदध्यात्तां षोडशिनः स्थाने निदध्याच्च-

तस्मो नार्मेधातिस्स्वस्मोऽग्निरह. एकां चानुष्टुभं ताꣳ षोडशिनः स्थाने निदध्यादिति शिष्टास्तिस्रः कौत्सस्य द्वे बृहत्यौ नौधसात्तथा कालेयात्तासा मेकां षोडशिनः स्थाने निदध्यादाताः सर्वास्त्रतुस्त्रिꣳशदक्षराः सम्पद्यन्ते ऽन्तस्थान् प्रतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्याद् द्वे ककुभौ रथन्तरास्त्रतस्रो यज्ञायज्ञीयास्तासां द्वे द्वे सन्धिस्तोत्रीयेषूदध्यादेव मेताꣳ सषोडशिकाꣳ ससन्धिकाꣳ रात्रिं निर्मिमीत ॥१०॥

ततः पृष्ठं बृहीति सवनेभ्यः पूर्वस्त्राहः षोडशिनश्चतुर्थꣳ रात्रेः पञ्चमꣳ सन्धेः षष्ठं पृष्ठाश्छन्दोमान् बृहीति त्रिवृत्पञ्चदशयोः समासश्चतुर्विꣳशस्ततः सप्तमꣳ सप्तदशचित्रिणवयोश्चतुश्चत्वारिꣳशस्तदष्टममेकविꣳशत्रयस्त्रिꣳशाभ्यां नवमदशमे सोऽष्टाचत्वारिꣳशं नवमे निधाय पञ्चदशषट्कानादत्ते सर्वꣳ षोडशिन ते सप्तचिꣳशदृचास्तेषां चतुर्विꣳशतिमादाय दशमस्याह्नोऽष्टावष्टौ पवमानस्थानेषु निदध्याच्चतुर आज्येषु तथा पृष्ठेष्वेकः सग्निष्टोमसाम्नः स्थाने तथा सापरात्ते त्रयस्तृचा अतिशिष्यन्ते तान् प्रथमस्याह्न उक्थस्तोत्रीयान् बुवीतैवं तदुक्थ्यादुक्थ्य मभि संक्रामति त्रिवृतः पञ्चदश मेतां महावृत्ती

सम्पदिद्व्याचक्षत आचार्या दशरात्रो महावृक्षस्य
ह्यग्रं गत्वा स्वर्गगमनमुपपद्यत इति नैषा संस्मिन्
दशरात्र उपपद्येत इत्यौपमन्यवस्त्रयस्तृचा अति-
शिष्यन्ते तान्यो ऽग्निष्टोमसंस्थ उक्थ्य स्तोत्रीयान्
ब्रुवीतापररूपं तच्छन्दोभिश्चैषा सम्पत्स्यतीति
तदयोत्र मेव ब्राह्मणं भवति दत्त ऐन्द्रोत इति
होवाचाभिप्रतारी काक्षसेनिर्य महावृक्षस्याग्रं गच्छन्ति
क्व ते ततो भवन्तीति षडहं महावृक्ष मवोच-
त्तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां
दर्शयति तदप्येव मिवं ब्राह्मणं भवति त्रिवृत्पञ्च-
दशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्तीति
तयोः समासश्चतुर्विंशस्तस्याष्टाचत्वारिंशो द्वाद-
शातिशिष्यन्ते ऽष्टमात्तथा दशमात्स चतुर्विंशो य
एते सम्पदौ विदुस्ते पक्षिणो ये न विदुस्ते पक्षास्त-
दप्येव मिव ब्राह्मणं भवति ये वै विद्वांसस्ते पक्षिणो
येऽविद्वांसस्ते पत्त्रा इति ॥ ५१ ॥

अथातो गवामयनं तदेक एकेनाह्नाभिविदधते
ज्योतिष्टोमेनाथैके ऽतिरात्र-चतुर्विंश-नवाह्नवता-
तिरात्र इति कृत्वा ज्योतिष्टोमेनैव संस्तुवन्त्यथैके
गोआयुषी दशरात्र मित्युपाहरन्त्येतं संवत्सर-

प्रवर्ह इत्याचक्षते गङ्गाहृत मिति चैतस्या समूर्पो वाकांखण्ड आसांश्चक्रे नानाहोभिर्वयं कल्पग्रामो यथैतद् ब्राह्मण मथ खलु य ऊर्ध्वं ज्योतिष्टोमदशा-हाभ्यां यज्ञक्रतवः सप्तभिः पर्यायैस्तेषु ज्योतिष्टो-मानां च दाशरात्रिकाणाञ्च द्रव्याणा मागमो भवति स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रा-न्वितानि भागान्वितानि सङ्ख्यान्वितान्याशीःस-प्रायाणीतिरूपाच्छान्दसान्यायन्त्यपि च व्यावृत्त्यर्थानि तत्रेह चतुर्विंशे यानि सप्तमात्स्तोमान्वितानि तानि यानि द्वितीयात्स्थानान्वितानि तानि यानि ज्योति-ष्टोमात् पृष्ठान्वितानि तानि यानि दशरात्रात् सर्वाणि रूपाणि क्रियन्त इति तानि यानि छान्दः सान्यभिवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमे ऽभि-रूपाणीति तानि तत् खलु बृहत्पृष्ठं रथन्तरं मध्य-न्दिन कुर्म उपक्रमणीय मस्त्विति रथन्तरं द्वितीय मिति बृहद्वीकै चोभयसमान इति ह स्माह शाण्डिल्यायनो बृहत्पृष्ठास्ते रथन्तरमध्यन्दिनाः कुशलेनैवं स्वे सवने स्वे छन्दस्युभे वामदेव्योत्तरे भवत इति चतुर्ऋचं होतुराज्यं समामनां-मस्तासां चतुर्थी मुद्वत्युतीभवत्यपरूपा प्रायणार्थे

ऽथाप्येतस्याꣳ रथप्रवादो भवत्यपह्नुपा स्वस्त्ययनार्थेऽथ यद्येतत्सर्वस्मारे भवत्येतां तत्र करोत्यथ खलु पूर्व मन्वहं ब्राह्मणाꣳ सन्त नान्वह कुर्म एवञ्च रहस्यब्राह्मणे दर्शयत्यपि च शश्वद् ब्राह्मण मधीयते ते वा एते पूर्वातिपूर्वा ये पूर्व मन्वह मुपयन्तीति ॥ १२ ॥

उद्दलकस्याचार्यास्त्रैककुभꣳ समानोदर्कयोन्यपह्नुपं प्रायणीर्थं तद्येतत्सौभरं पृष्ठान्वितं विकल्पो वास्माद् ब्राह्मणचोदितत्वादथ खल्वाह सर्वाणि रूपाणि क्रियन्त इति तत्र खल्वाचार्या एतेष्वेव द्रव्येषु सर्वास्तस्तोमान्सर्वाणि पृष्ठानि सर्वा विभक्तीर्दश-रात्ररूपाणीति भक्तिमात्रेणैव कल्पयन्ति त्रिवृत्-पञ्चदशौ चतुर्विꣳशꣳ सम्पद्यते पञ्चदशसप्तदशान् पञ्चैकविꣳशान् षडेव त्रिणवान् षड् त्रयस्त्रिꣳशा-न्त्सर्वाणि पृष्ठानि बृहद्रथन्तराभ्या मुपाप्तान्येतत् परोक्षाणि हीतराणि वामदेव्येन वै तस्माद्विसृष्टान्यु-दꣳशोयेन वै तद्धि सर्वेषाꣳ रूप मित्यनिरुक्तायां निरुक्तं विभक्त-सर्वाभिप्राय वामदेव्येन स्वरविभक्तिः पृथग् दाशरात्रिकेभ्यो द्रव्यागमꣳ सम्पश्येदुपवती प्रथमादियवती द्वितीयाद्विद्युत्वती तृतीयाच्चा-साह्रीयꣳ सस्तोबीय चतुर्थाद खलु साकमश्व

मुक्थप्रणये ऽकरिष्यदतिरात्रे तत् कृतं भवति तत्र समविष्वारयिषीत् त्र्यचैतस्य चासाहीयं त्र्यहोपक्रमादुपक्रमेद् बार्हताद् बार्हते सोढवतीषु सोढवन्नामोऽथेदं कर्म सहेमहीति पार्थपञ्चमा दुद्वंशीयं षष्ठाद्यद्वा उद्वंशीयं तदुद्वंशपुत्र इति हि भवतीत्युद्वंशीयेनैव सर्वरूपावाप्ति मेके बहुसप्तमादिन्द्रे अग्ना नमो बृहदित्यष्टमात् मम तद्दैर्घश्रवसे नवमादभीवर्त्तः सत्रोत्रीयो दशमात् ॥ १३ ॥

॥ इति निदानसूत्रे चतुर्थः प्रपाठकः ॥

---

॥ अथ पञ्चमः प्रपाठकः ॥

अथैषोऽभिप्लवस्तस्मिन्त्सारण्ये गेयं छन्दःक्लृप्तं बभूवेति शाण्डिल्यो ऽह्नमेव प्राग् विषुवतो ऽह्नमूर्ध्वं सादित्यन्नतानि शुक्रियाणि विषुवति स तवश्रावीयाणि सामानि व्रत इति समूहति बार्हद्रथन्तरपृष्ठाह्निनित्याभिरनित्योऽयं षडह इत्याषाढिकौरनिख्या इत्यापद्यते ते खलु भाल्लवब्राह्मविनः स्तौत्री-

याल् प्रतिपदः कुर्वन्ति यथास्थानमेवानुरूपाननु-रूपान् वयं प्रतिपदः कुर्मः स्तोत्रीयाननुरूपानेवं यथोत्तरं स्तोत्रीयानुरूपाणां प्रत्याहारो भवतीति षडहवशेन मानां प्रतिपदः समानं पर्यास मेकाहः-वशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनु-गृह्णात्यथैतान्येव वै बृथिकान्यान्यान्युद्धृत्य गाय-त्राणि तद्विभक्तीनि प्रतिनिदधाति त्रीणि त्रिणिध-नानि करोति त्रीणि त्रीणि ह्येव षडहेऽवधारित-त्रिणिधनानि भवन्ति तानि यत् यथाक्रतमध्यन्त्यामास्य प्रायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्थं द्वितीयस्य माध्यन्दिनान्त्यं करोत्येतत् पुरस्तात्स्तोभं चत्रसामं बृहति षष्ठेऽभिरूपं तेन प्रच्युत मिह-वद्वासिष्ठं षष्ठेऽहन्यनुगृह्णाति स्वरविभक्तेरनु-ग्रहाय ॥ १ ॥

अथैते त्वाष्ट्रीसामं चान्धीगवं च तृतीयचतुर्थयो-रह्नोर्व्यतिहरन्ति त्र्यहयोर्व्यतिषङ्गाय तत्र ता एव देवताविभक्तयोऽथ सामान्तविभक्तय एतेषा मेव द्रव्याणां तल्लिङ्गाः कल्पयेत पञ्चमे तु निधनविभ-क्तिनं विद्यते षष्ठे चेडाविभक्तिस्तत्राभ्यावारयन्ति बार्हद्गिरं वानुकल्पयेत् सौश्रवसं वा उक्थानां

ब्रह्मसाम कुर्याद्गोष्टं पृष्ठे नु कल्पयेदिति तस्य त्रिकद्रुकाः स्तोमाः षाडह्निकानि तन्त्राण्यस्ति च षडहप्रवादोऽपि चैवं रहस्यब्राह्मणे दर्शयति ज्योतिष्टायणो ज्योतिरहर्यनः षडहो ऽभिप्लव इति चैतरेयिणां ताण्डं सुमदेवं प्रयुङ्क्त एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति यथाख्यान मितरदिति तत्र यान्येकाहिकानि द्रव्याणि स्तोमान्वितानि तानि यानि षाडह्निकानि तन्त्रान्वितानि तानि यानि छन्दोभिकानि त्र्यान्तानि त्र्यस्ते त्रय इमे लोकसम्मास्ते लोकसम्मा स्त इमे बृहद्रथन्तरपृष्ठास्ते बृहद्रथन्तरपृष्ठा इमा इति रूपा छान्दस्यान्यायन्त्यपि च व्यावृत्ययानि स्वादिष्ठां प्रथमस्याह्न आर्भवीयां करोति या ह्येतस्याह्न आर्भवीया भवति न तस्या उत्तरे अधीमहे तस्याः प्रयवन्मापशरावय उत्तरे अधीयते तां ते कुर्वन्त्याभीशवं चतुर्थे नावमिकं कुर्यादिति धानञ्जय्यो व्यावृत्तये पृष्ठ्याभिप्लवयोश्चातुर्थिक मेवेति गौतम एकैतस्याह्नः स्वरविभक्तिर्भवतीति भवतीति ॥ २ ॥

अभीवर्ती ब्रह्मसाममिति तस्य स्तोत्रीयविधिर्यदितः समानं साम भवत्यन्योन्यः प्रगाथ इत्यत्थ न्तंनानात्वं

य आप्लुतं कुर्वते यथा दुग्धा मुपसीदे-देवं तदिति प्रयुक्तप्रतिषिधस्तस्यान्ववायः पञ्चसु मासु बार्हताः आप्यन्त इत्यथातेः प्रगाथायतानि चतुःशत मैन्द्रा-बार्हताः प्रगाथा दशतयीषु तान्त्समामनेत्तेषां चत्वा-रोऽन्यचस्थाना बृहद्रथन्तरकालेयस्तोत्त्रीया अहरहः शस्यन्त इन्द्रक्रतुरौत्तरपचिकः शत मतिशिष्यते तेषा मेकं चतुर्विंशे कुर्यान्नून शत मतिशिष्यते सप्ता-शीतिः सतोबृहत्यस्त एकेन न त्रिंशत्सात्तोबार्हता-स्तचास्तेषा मिवैकविंशति माहरति तद्विंशति-शतं सम्पद्यते विंशतिशतं पञ्चानां मासानां माभि-प्लविकान्यहानि भवन्ति तेष्वेतान् प्रगाथान् प्रयुञ्जीत तृतीयेऽहनि सतोबृहतीः कुर्वन् य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे सतोबृहतीः कुर्यात् तृतीयपञ्चमयो रह्नोर्न हि प्रगाथा अनुभवन्तीति तत ऊर्ध्वं छन्दसी संयुञ्ज्यादीर्घ्याहे तृच एकां गायत्री मुपदध्यात्सतोबृहत्यतिशेषं समाप्येति गौतमोऽष्टौ सातोबार्हतास्तृचा अतिशिष्यन्ते तान् प्रथमे चाभि-प्लवे कृत्वा द्वितीयस्य द्व्यहे तत ऊर्ध्वं छन्दसी संयुञ्ज्या-दिति चतुरुत्तरैरेव छन्दोभिरेतव्य मिति गायत्रीं चतुर्विंशे ऽभीवर्त्तं कुर्यादुष्णिहि प्रथमं चाभिप्लविके

ऽनुष्टुभि द्वितीये तत ऊर्ध्वं बृहत्या पञ्चमासं हुत्वा य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्य पञ्चमेऽहनि पङ्क्तीः कुर्यादपि वा षष्ठे तत ऊर्ध्वं त्रिष्टुब्भ्युत्तमे स्वरसाम्नि जगत्या मित्यत्रापि सातोबृहत्यतिशेषं समाप्येत्येवं गौतमो नव सातोबार्हतास्तृचा अतिशिष्यन्ते द्वौ च प्रगाथौ तान्प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य च पञ्चाहे पङ्क्तीः षष्ठे तत ऊर्ध्वं त्रिष्टुब्भ्युत्तमे स्वरसाम्नि जगत्या मिति ॥ ३ ॥

छन्दःसंयोगरूपोऽयं विधिस्तत्स्थाने चानुक्तत्वं मासशब्दवैयर्थ्य मिति चेत् पञ्चसु मास्स्विति यथा पृष्ठ्यायनेऽपवादस्तु लिङ्गेन रुद्रागावतीवन्न च सामान्तरये तत् कमास्तोत्रैकदेशे यथा कालक्रान्तौ लोके कृत मिति बृहत्या चैव त्रिष्टुभा चैतव्य मिति त्रिष्टुभि चतुर्विंशे ऽभीवर्त्तं कुर्याद् बृहत्यां प्रथम आभिप्लविकेऽपि च बृहत्या मेव चतुर्विंशे बृहत्यां प्रथम आभिप्लविके त्रिष्टुभि द्वितीय एव मनुपूर्वं छन्दसोः प्रयोगो भवतीति तत ऊर्ध्वं व्यत्यस्येद् बृहतोच्चयं एव तन्मन्य इति यौरिचवृत्तिर्बृहत्या पञ्चमासं हुत्वा य एते ऽष्टौ सातोबार्हतास्तृचा अतिशिष्यन्ते ये चैते चयाऽन्यंचस्थाना बृहद्रथन्तरकालेयस्तोत्रीयास्तैः षष्ठे

मासि त्रैष्टुभे व्यत्येयेद्यदहः कालेयस्तोत्रीये ऽभी-
वर्त्तं कुर्यात् तरणिरित्सिषासतीति कालेय मा-
सञ्चाराद् यदहो रथन्तरञ्च बृहत्स्तोत्रीये रथन्तरꣳ
स्यादपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं
कुर्यादच्च स्वनयासु रथन्तरं भवतीत्यथ त्रयस्त्रिꣳशत्
प्रगाथ मेकं चतुर्विꣳशे कुर्यात् सातोत्राहेति त्रय-
स्त्रिꣳशायने ऽभिप्रयुञ्जीता ऽपि वा न सतोबृहती-
राद्रियेत य एव चतुर्विꣳशे त मनुसꣳहरेदिति ॥ ४ ॥

एतेनैवोत्तराणि द्व्यहानि व्याख्यातान्या द्विप्र-
गाथाद्यथाकारी पुरस्तात् प्रगाथान्स्यात्तथोपरिष्टा-
दिन्द्रक्रतौ सामानि प्रतिकल्पयेत् तावन्ति तच्छन्द-
स्यानि निधनवन्ति यदि तच्छन्दस्यानि न विद्यो-
रन्नपि छन्दसानि कुर्याद्यान्त्राभिरूपाणि स्युरिति-
तञ्च निधनतञ्च कतम एषां कल्प इति प्रथमौ
प्रतिषिद्धावित्याङ्गरथंतरे सर्वे कल्पा अपि वा द्विप्र-
गाथ मेव कल्पꣳ स्याद्दोषदर्शी नून पूर्वानत्यक्रमी-
दिति ते कस्य हेतोः षट्प्रगाथं मन्यन्ते समारभ्यन्त-
त्तीति नेदꣳ षट्प्रगाथ मिति शाण्डिल्यायनो यः
षट्प्रगाथं चिकीर्षेन्न सतोबृहतीरादृयेतापि य एव
चतुर्विꣳशे त मनुसꣳहरेदिति स खल्वय मभीवर्त्तः

षट्प्रगाथाननधितिष्ठति पूर्वस्मिन् पञ्चसिद्धेश्च सतो-बृहतीरेव मेवैन्द्रक्रतुरुत्तरे पञ्च प्रगाथिकानि द्वे सतोबार्हते विकर्णं मष्टम मेव मनयोः समाधि-रित्यथैतत्सुत्रानं मौष्णिह मां विषुवतः सर्वत्र पृष्ठ्यपञ्चाहवर्जं मतिरात्राच्चायथाकामकल्पात्यादे-तेषा मंकां तदभिप्लवस्य राथन्तरेष्वहस्सुविचार्यते पृष्ठे चैव मिव षडहे नाना स्वर्गिधनानि भविष्य-न्तीति पृष्ठ्या मेव छिन्दन् व्यूहेत् समूहेदिति व्यूढः स्यादिति शाण्डिल्यायन एव मत्स्यर्षिदर्शनं भव-त्यथापेरवं पुराणमाचार्यवच इति समूढः स्यादिति धानञ्जय्य एष न्याय एवं हि ज्योतिष्टोम एवं दश-रात्रस्य प्रथमस्त्र्यह एवं दशम मेव महोनैकाहा इत्यथापि समूढ एव पूर्व उत्पन्नो ऽपरो व्यूढ एवं च रहस्यब्राह्मणे दर्शयत्येव मिव ब्राह्मणं भवति छन्दांसि वा अन्योन्यस्य लोके मभ्यध्यायन्नित्युत्पन्नस्य लोको नाम भवति ॥ ५ ॥

अथाप्रि विलुप्तो व्यूढः षडहेन हि त्रिष्टुभः प्रतिपन्नां लभते न जगत्यो माध्यन्दिनान्ताश्च गायत्र्य आर्भवान्तान् यच्चैवं खल्वेसच्छन्दांसि विप्रच्युत्य दशमे ऽहनि सम्प्रकल्पन्ते तत एव व्यूहः सिध्यतीति

तद्धैतेयमिव ब्राह्मणं भवति नेत्ते छन्दोमेभ्यः पृष्ठो बृहन्मानश्च इत्यथापि समूढेन षडहेन सम्प्रयुक्तो भवतीति तस्यैके प्रत्नवद्बहिष्पवमानं कुर्वन्ति न ह्येता बृहत्कारितां इति नवाहयोगा इमा भवन्तीति धानञ्जय्यः कथमसमापयिष्यन्नवाहं नवाहयोगाः कुर्यादिति तत्र नित्या वुपपन्नौ कविमानभिप्लवन्याये न पार्थं द्वितीयस्य माध्यन्दिनान्त्य मभिप्लवन्यायेन नित्याभिः समूहति नित्योऽयं षडह इति तत्र तान्येव सामूहिकानि यान्यभिप्लवे अनिरुक्तान्येव मेवै तदन्यत्तदेतत्स्वयोनिकामः कारयन्तीति कथं पृष्ठेऽभीवर्त्त इत्यकर्त्तव्य इति शौचिवृक्षिः पञ्चसु मासु बार्हताः प्रगाथा आप्यन्त इत्येते पृष्ठादेवैषाम्भिः सिध्यतीति कर्त्तव्य इति गौतमो यत्सामावसृजेयुरेव स्वर्गाल्लोकात्पद्योरन्निति हि भवतीति पृष्ठ्यो वा यदेतत् सतोऽवादीन्न ह्येनं की च माभिप्लवाच्चेग्रावयन्तीति तं खलु बृहतीषु कालेयद्वितीय मनुकल्पयामः सन्तानरूप मस्मिन् भवतीति अथ मभिजितीत्यकर्त्तव्य इति शौचिवृक्षिः कर्त्तव्य इत्येव गौतमस्तत्पृष्ठ्येनैव व्याख्यातः मथाप्येष एवं क्रम एवैकाह आगच्छत्यभीवर्त्तमध्यन्दिन इत्यभीवर्त्तमध्यन्दिन इति ॥ ६ ॥

अथैते स्वरसामानस्तानग्निष्टोमानाहु नवाहकारिणः कुर्युरुक्थ्यानेकविंशत्यहकारिणो योऽन्यथा कुर्यादकुशलः पुरुष इति ब्रियादथैषां पृष्ठ्योत्तरीया आनुष्टुभा एकबृहतीका अनुष्टुभौ पूर्वे राथन्तरयोर्बृहत्युत्तमेत्येतदेव विपरीतं द्वितीये चतुर्ऋचं तृतीयस्य भवति तासां तृतीया मुहृत्य चतुर्थीं तृतीयां कुर्म एषा बृहती भवतीत्यथ यत्रासु षोडशिसाम भवति सर्वास्तत्रानुष्टुभो भवन्ति यत्र खलु बृहद्रथन्तरे ते करोति स्वराणामेव पृष्ठत्वे तिष्ठमानोऽथ स्वराण्यानुष्टुभान्यनुष्टुप्स्विति तत्र यान्यैकाहिकानि द्रव्याणि पृष्ठान्वितानि तानि यानि षाडहिकानि तत्रान्वितानि तानि यानि छन्दोमिकान्यभिप्लव एव तानि व्याख्यातानि सुब्रह्मण्यवैष्टम्भं प्रथमेऽहनि करोति दिगनुग्रहायादितः मच स्वरं भवति तेन प्रच्युतं हि वं तृतीयेऽहन्यनुगृह्णाति पञ्चसोः सन्तानाय विकल्पयन्त्यथ ऽनुष्टुभौ मध्ये निधनान्यैडान्यनुजिघृक्षन्तः स खलु विकल्पयन्स्वाराण्यन्यानि कुर्यादविकल्पयन्नैडानि विकल्पयन्तीति हैके विकल्पयन्तश्चैडान्येव कुर्वन्ति तृतीयसवनस्याञ्चेण द्विकल्पयंस्त्वेव स्वाराण्यन्यानि कुर्यादविकल्पयन्नैडानि

वसिष्ठश्च प्रियं चतुर्थाद्यायान्तर्यात् प्रत्याहरति तेरश्चं वेति विचारयन्त्युद्दण्ङ्यीयबाध सिद्दानुग्रहणात्यामष्ठीयवं द्वितीयात् प्रच्युतं तृतीये ऽहन्यनुग्रहणात्यत्र स्वयोनि भवतीति॥ ७ ॥

अथैष विषुवाऽस्तत्र खलु बृहद्रथन्तरे करोति शुक्रियाणां मेव पृष्ठत्वे तिष्ठमानो ऽथापि स्वर्गौक्तो विषुवाऽस्तत्र स्वर्गौक्ते बृहद्रथन्तरे अचिकीर्षीत्ते यत्पवमानयोर्निदधात्येतदेनयोरपयतोः स्थानं भवति ते यद् बृहत्यां चानुष्टुभि चैतौ नेदिष्ठिनौ चातुष्पदावाः वांपा विति तत्र खलु गोतन्त करोत्येतदन्ततन्त्रतं मन्त विधेयं भवति मध्यचरस्तच यान्यन्तलक्षणानि (मध्यलक्षणान्य-*) ज्योतिर्विधानि शान्तिविधानि शुक्रियसदृशान्यभिरूपाणि तान्यथ खल्वचानुष्टुभः प्रतिपदः करोति यथैतद् ब्राह्मणमुपवतीं वयं परमे ऽहनि परमां प्रतिपदं कुर्मो यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायन उपवत्येव तेषां कुशलेनोपोह्य तानि बृहद्रथन्तरे इत्यथापात्मोक्तो विषुवाऽस्त प्राणोक्त्या गरयत्रा प्रत्यपित्सोहान्तो ऽनादान्त मिति वा वातेनावातिरति माष-

* "क, पुस्तके नास्ति ऽयो मे विद्यते।

शरावयोऽग्निनिर्म्मथाय पवत इति शुङ्गास्तस्था उत्तरे उपवती चाग्नियत्रतो च तच्चैके नाभीवर्त्तं कुर्वन्ति मौर्न्नपञ्चिकोऽयं भवत्यथाप्येवं सुज्ञानेन समाधि-रिति मध्यन्दिनेऽयं कुर्म एव भिव ब्राह्मणं भवति तावुभौ विषुवति कार्याविति यद्देतत्सुज्ञानेन समा-धिरित्याभैत्र नरं तद्भवति नो पूर्वपञ्चिक्ष मूर्द्धं पृष्ठाद-चिकीर्षीत् ॥ ८ ॥

अथ खल्वाह त्रिष्टुब् जगतीषु भवतीति कथेदं ब्राह्मणं स्यादिति पृष्ठाग्निष्टोमसाम्नोरित्याहुरेते क-ल्पाख्याते भवत इत्यथाप्याहुस्त्रिष्टुभ एवेमा जगत्तङ्-संयो भवन्तीत्यथापत्राहुस्त्रैष्टुभजागतादेवेमाः सूक्ता-द्धाहृता भवन्तीत्यथाप्याहुर्जागत मेवाचैकं पदं भवती-त्यपि वा सम्प्रदं एव ब्राह्मणं स्यादपि वा योनि-वादश्च कर्मवादश्च स्याज्जागतं हि सत् त्रिष्टुप्सु क्रियत इति समसितथ्यन्त्रिष्टुब्जगतीमन्य इति कौत्सस्त्रिष्टुब्जगतीषु भवतीति सति किं मन्यत् समासादित्याकृत्ं पृष्ठे ऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतम एवं च गत्त्सोः समाधिरपि चेयं स मा मेन्द्रक्रतुरनुगृह्णात इति तच्चैतेषा मेव चत्वारि यान्यभिप्लवे वासिष्ठा गौप्लवे च द्वितीयप्रथम-

योरह्नोः शुद्धाशुद्धीयं चेति विचारयन्ति शाण्डिल्य एतदक्षरणिधनं भवतीति नाद्रियेतेति, शौचिवृक्षि-स्तदभीवर्त्तेनैव व्याख्यात मथापि नित्यान्येवाभिरूप-तराणीतीन्द्रक्रतु मस्तूयमान मनुश्रꣳसयन्त्सामानि प्रतिकल्पयेदिति गौतमो जनित्वं विश्वजिति यानि पृष्ठेऽभीवर्त्तंल्लोके तानि दाशरात्रिके पृष्ठ्ये तेषां चत्वारि छन्दोमेषु यथाभागं यथापृष्ठं वा पौरुमीढं व्रतेन ज्ञात्रेण श्येतं वा तन्त्वज्ञात्रेणैवं वा खलु कुर्यान्न वाद्रियेतासाऽमा व मिन्द्र क्रतु मनुशꣳसयितु-मिति॥ ६ ॥

अथोप दशरात्रꣳ संभरतां पूर्वं पञ्चसि विचारो भवत्यतिरात्रचतुर्विꣳशे त्रीनभिप्लवान् पृष्ठ्य मिति कृत्वा पञ्चायनमासानुपेयुरभिजित् स्वरसाम्नो न त्रिꣳशत्तमा मुपसंभरन्त्यथैतं दशरात्र मेक आवर्त्त-यन्त्यावृत्तिसाधूत्तरं यज्ञ इति न वयं मावर्त्तयामो ऽनुपेतं पूर्वं पञ्चसि तं कस्मादावर्त्तयामेत्यथापि नियुक्त-मानसो भवति यद्यु हैव स्रुते मानसादावर्त्तयिष्यद्दशमं मानसं चरद् व्यवयिष्यद्यद्यु वै, सन्मानमं वृतं च मानसञ्च व्यवयिष्यदपि चाक्लृतेन दशरात्रेण मानस मध्यगायिष्यत्स काय हेतोरक्लृतेन व्रतेन मानस

मधि श्राययतीति व्रतसाम्बन्धात्प्राजापत्यं व्रतं प्राजापत्यं मनः सर्वाग्निव्रतꣳ सर्वाग्निमनस्तदपि शश्वत् सांवर्गजिता गौतमा उपरिष्टाद्व्रतस्य मानस मधीयते प्राकृतेन व्रतेन मानस मधिशेषयामेति सामान्यात्तु वय मनधिश्राययन्तो मन्यामहे ऽथैतान्यचिपयन्त्यहानीत्याचक्षते त्रिरात्र चतुर्विꣳशे नवाहद्वोश्चायुषी दशरात्रे व्रतात्त्रिरात्रे अन्तमगादनपक्रमगाद्वेत्यनपक्रमगाद्वेति ॥ १० ॥

अथातः संवत्सरा वर्गाणां पञ्च संवत्सरा वर्गास्तेषु धीरो मनीषया कर्मणा उपसदो विद्यात्सꣳस्थावेषु व्रतानि च षट्त्रिꣳशोनो नवोनश्च षडहोनो ऽथ सावनो ऽथाष्टादशभिर्ज्यायानहोभिः सावनात्परो नक्षत्र मिदं मासश्च तस्य चैव त्रयोदशी चान्द्रमसः सावनस्योभावथाष्टादश्युत्तमो ऽष्टासप्तत्रिꣳशतं पौर्णमास्यां प्रसाधयेद् गवामयनस्योपायꣳस्त्वसुरः प्रतिपादयेत् तेषां नक्षत्रः प्रथमस्तस्य सप्तविꣳशिनो मासाः सप्तविꣳशतिर्नक्षत्राणीति तस्य कल्पः प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिवद्रूथवाहं कुर्यात्प्राग्विषुवत उत्तमस्योत्तमस्योर्ध्वं विषुवतस्ते खल्वभिप्लवतस्त्व एव क्लृप्ताः स्युरित्येक एते चेहाधिकृता न चापि नित्र-

र्यत्यथापि दृश्यते चाहस्त्राहतन्त्रे कृष्णो यथा स्वरसामानश्चिकद्रुकपञ्चाहश्चाभिप्लवतन्त्रे सप्तदशरात्रे स्वरतन्त्रा इत्यपर मेवञ्च तन्त्राविलोपोऽपि च सूत्रेषु त्रिकद्रुकत्र्याहः स्वतन्त्रो भवत्यथ नवोनस्तथैवं त्रयोदश मासाः सम्भार्ययोर्मासयोर्नवाहं लुम्पेच्चतुरह मेव प्राग्विषुवतः पञ्चाह मूर्द्धं तस्य कल्पः प्रथमस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात्प्राग् विषुवत ऊर्द्धं विषुवत उत्तमस्याभिप्लवस्य स्थाने ज्योतिषं नात्र त्रिषुवानभिभवत्यन्तरेऽत्र पञ्चसि विषुवानुपसङ्ख्यायत इत्यथ षड्मासाश्चान्द्रमसाः षट् पूर्णोपक्रमा ऊनावसानाः पूर्वे पञ्चसि मासाः त्र्यूनोपक्रमाः पूर्णावसाना उत्तरे तस्य कल्पः प्रथमस्य प्रथमस्याभिप्लवस्य स्थानेऽभिप्लवपञ्चाहं कुर्यात्प्राग्विषुवत ऊनेषु मासेषूत्तमस्योत्तमस्योर्द्धं विषुवतः ॥ ११ ॥

व्याख्यातः सत्त्रवत्सः स एष आदित्यसंवत्सरो नात्र आदित्यः खलु भवदेतावद्भिरहोभिर्नक्षत्राणि समवैति त्रयोदशाहं त्रयोदशाह मेकैक नक्षत्र मुपतिष्ठत्यहस्तृतीयं च नवधाकृतयोरहोरात्रयोर्द्वे कले चेति सांवत्सरास्तास्तुषञ्चाशत कलान्ते षणानवगाः स अष्टषष्टित्रिंशतः षष्टित्रिंशते

श्लोकौ भवतः सप्तविंशती राष्ट्रस्य राज्ञो वसन्तयो मितास्त्रयोदशाह त्रयोदशाह मेकैकं नक्षत्र मुपतिष्ठति त्रयोदशाहानि तृतीय मक्रमं तस्मात्रेधा दशतयो विकुर्वं स्त्रिधैवं पन्थानं विततं पुराणं चत्वारिंशता नवरात्रैः समस्नुत इत्यथाष्टादशभिर्ज्यायानादित्यसंवत्सर एव तैर्गयनिको भवत्यादित्यः खलु शश्वदेकदा अथमासानुदङ्ङेति नव चाहानि तथा दक्षिणा तदप्येते श्लोका भवन्ति यस्मिन्वै परिवत्सरे सौर्यो मासो ऽथ चान्द्रमो नाक्षत्रो न विलुप्यते कः स्वित्तं वेद कः स्विदष्टासप्तति स्त्रिंशति तस्मिन्संवत्सरे मिते सौर्यो मासो ऽथ चान्द्रमसो नाक्षत्रो न विलुप्यते सप्तविंशति मेवैषं सप्ताहानेति दक्षिणा तथोदङ् सप्तविंशति मिति तत्र कल्पः सत्त्वार्ययोर्मासयोरष्टादशाहान्युपाहरेन्नवाह मेव प्राग्विषुवतो नवाह मूर्ध्वं त्रिकद्रुकांश्चाभिप्लवं च प्राग्विषुवतो ऽभिप्लवञ्च त्रिकद्रुकांश्चावृत्तानूर्ध्वं विषुवतः ॥ १२ ॥

कथं मनाहिताग्नेः सत्रासनं मिति न विद्यत इति शाण्डिल्यायनः सर्वं इष्टप्रथमयज्ञाः पृथक् सर्वोपकरणानीष्ट्वा समापयाग्नीन्त्सत्र मासिरवोदवसानीयान्तान्त्विजो कृत्वा पृथक् पश्चिममनीयैर्यजेरन्निति

नो.विधानं यथा त्विद मह्यं सचिणो भवन्त्यहीन-
याजका इमे कृष्णाजिनकण्ठा भवन्त्यथापिं यः सत्रे
करणाद्यजमानी मन्येतापि नूनं सो ऽहीनैकाहेष्वपि
यजमानो मन्येत तत्र ह्यपि करोतीति यद्यु वै यज-
मानशब्दाद्यजमानो मन्येतापि नूनं ये यंजामह
इतीष्टिपशुबन्धेष्वपि यजमानो मन्येत तत्र ह्यपि
करोतीत्यथाप्याह य एतेनानिष्ट्वेति तदेतदनाहि-
ताग्नौ साधिष्ठ मुप पद्यत इति विद्यात इत्यपरं मेवं
च समारम्भोऽपि चैवं सूत्राणि भवन्ति स्थालीपाकैरना-
हिताग्नयो यजेरन्नित्यथापि हश्यते परांग्निष्विज्या
यथा पुरोहितस्याग्निभिरव मनु चरन्तीति तदपि
शश्वद् ब्राह्मणं भवति यथा पररथेनाध्वानं मियादेव
मेष स्वर्गं लोक मप्येति यः पराग्निषु दीक्षित इत्य-
थापि ब्राह्मणं भवति तेषां ये पुरोडाशिनः स्युरपि
ह्यपुरोडाशिनो भवन्तीतीवार्थौ भवत्येतेनानाहिता-
ग्नीनां सत्रासन मुक्त मथापि ब्राह्मणं मेव भवति
तेषां ये पुरस्ताद्दीक्षिताः स्युर्येद्य तेषां गृहपति-
रित्यपि ह्यदीक्षिता एव भवन्तीतीवार्थौ भवत्येते-
नानिष्टप्रथमयज्ञानां सत्रासन मुक्तम् ॥ १३ ॥

॥ इति निदानसूत्रे पञ्चमः प्रपाठकः ॥

॥ अथ षष्ठः प्रपाठकः ॥

अथापि समाहारसिद्धि सत्रं भवति तदेतत् संसहृप मग्नयस्तत्र द्रव्याणि च मन्त्रेवेय मित्यथ यथै- तच्छाण्डिल्यायनायगृहपतिस्तथा विगृह्णीते ऽथ कः पृष्ठशमनीयः स्यादिति यथाकामी पथ्यानां दक्षिणा- वता मिति कार्षगण्यो ऽनारभ्य वदति तस्मादुदवसाय दक्षिणावता यजेतेत्यथापि पृष्ठशमनीयं नाम क्रतु मधीमहे ऽथापि सारस्वतस्येष्टिरेव पृष्ठशमनीया भवति तथा दार्षद्वतसौरयोरिष्टिर्वा पशुर्वेति ज्योतिष्टोम इत्यपर मनादेशे कं मन्यं प्रतीया मथाप्याह यामि- तद्दक्षिणेव स्यादेष एव कार्य इत्यमितदक्षिणा उ खलु पृष्ठशमनीयो भवत्यथाप्येष सत्राणा माद्यन्तेषु दृष्टो भवत्येय मु खल्वन्ततम इत्यथापेऽध उच्चावचाना माहाराणा मन्तेषु दृष्टो भवति यथा चातुर्मास्येषु वाज- पेये राजसूये संदंश-वक्र्योरिति यद्वेतत् सारस्वते दार्षद्वतसौरयोरितीष्टिप्रायः स भवति सुत्याप्राये तु ज्योतिष्टोम एवाभिरूपतर इति तदपि शश्वद् ब्राह्मणं भवति तस्मादुदवसाय ज्योतिष्टोमेनाग्नि- ष्टोमेन रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति ॥ १ ॥

अथात एकाहास्तेषां यानि ज्योतिष्टोमानि द्रव्याणि नित्यानि तानि यान्यन्यान्युक्थान्वयानि तानि बृहत्पृष्ठेष्वन्यत् तत्र करोति बृहदेकाहेषु स्थानवच्चिकीर्षन्नर्थे प्रत्नां माध्यन्दिनीया मेषा सङ्कल्पिता बृहतेति यस्तेमदां मार्भवीया मेषा बार्हता दृक्च इत्यथ यत्र सार्थिश्चिकीर्षा * भवति परिस्वानां तत्रार्भवीयां करोति तदाहुः परिस्वानैवैतस्य तन्त्रस्य पुरार्भवीया बभूव ताᳪ सानुर्वीराहिरप्निनाया-षडहमात्रो भवतीति सैषा तयोर्वाक्सᳪहिता प्रोच्यते ऽतो यान्यन्यानि द्रव्याणि बार्हतलिङ्गानि वृतानि भवन्ति बार्हतेभ्यो बाह्योभ्यो ऽयᳪ सोम इति माध्यन्दिनान्तीया बार्हतलिङ्गा सूर्यवत्य आर्भवान्तीया दशमादन्तान्विता अन्ते हि बार्हत्पृष्ठ सित्येतङ्गोस्तञ्च मित्याचक्षते ऽथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु वृषा शोणा भवति वृषा हि राजेति व्रात्यस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वा-देवैतस्मिन्नेवं तन्त्रे बृहत्पृष्ठे सूर्यवत्यो न चैकस्तोम-विलोप उत्तमादा पृष्ठादार्भवे स्तोमं प्रत्यवरोहः प्राग् ज्योतिष्टोमविचारेभ्य एतयोस्तन्त्रयोः समास उभय-

* "शाश्वी चिकीर्षा"—इति ख।

सामतन्त्र मित्याचक्षते प्रतिलोम मग्निष्टोमेष्वनु-
लोम मुक्थ्येष्वग्निष्टोमभक्तिर्हि स्वादिष्टोक्थ्या भक्ति-
र्यत्ते मदाथ यचैकर्चौ माध्यन्दिनीया भवन्तीन्द्रा-
येन्दो मरुत्वत इति तत्र कारोत्त्येषा सामान्या तृच-
प्रथमा मरुत्वतीत्यथ यत्रान्ये माध्यन्दिनीयार्भवीये
भवतः कल्पसप्रायाणि च द्रव्याणि तदाशीस्तन्त्र
मित्याचक्षते ऽथ यत्तदभिवादि द्रव्यं भवति यत्काम:
क्रतुस्तत्कल्पसप्राय मित्याचक्षते तदेतत् सार्वक्रतु-
कम् ॥ २ ॥

अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपी-
तरेतरस्य तन्त्र गच्छतो: प्रतिपदाज्यानि ब्रह्मसा-
मोष्णिह मित्यभीवर्त्तस्तु राजयज्ञेषु भ्रातृव्यस्याभि-
वृत्त्यै भ्रातृव्यवान् हि राजेति यत्र वोभयसामा सन्
रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारो ऽभूदितीव
यत्र वा प्रजापतिप्रवाद एकार्त्तरेणिधन एक: प्रजा-
पति रिति यत्र वाहर्गणस्य नाना ब्रह्मसामानि
चिकीर्षति तत् प्रथमे ऽहनि करोत्यक्षरणिधनानां *
प्रथम मायतन मिति श्रायन्तीयं प्रायश्चित्तार्थेनैव
भवत्यथ यत्र नाग्निष्टोमसाम भवति तद्यज्ञायज्ञीय

* "करोति पञ्चाक्षरणिधनानां"-इति ख ।

मनुष्टुभि भवत्येष नेदिष्ठे चतुष्पदं भावाप इत्यथ यत्र श्यावाश्वं प्रच्यवते तद्रथन्तरपृष्ठेषु. श्रुध्यं निहवानुग्रहाय व्रात्यस्तोमेषु च व्रात्यानां मुपहवायाथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कलं रोहद्दर्शनं श्रुध्यं स्तोमप्रत्यवरोहे न चिकीर्षति विषमेषु स्तोमेष्वभि सोमा राथन्तरेषु परीतः बार्हतेष्वेते राथन्तरीबार्हत्याविति तत्र गोआयुषोऽह्नं चतुर्ऋचर्त्थं कुर्वन्ति भाल्लविनश्चतुरस्तृचैकर्चान् व्यत्यासेन कालबविनोऽध्यास्यायां त्वेवैकर्चावद एकस्यां प्रथमायामंहस्तिसृषु परास्वदंष्ट्रिसृषु पूर्वास्वदो ऽध्यास्यायामिति शाण्डिल्यायनिनस्तृचप्रथमायां पय मेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे अध्यास्याया मन्तत एकर्चं ताण्शभकर्णः कृत्वाचयत इतरथो अनध्यास्यायां मध्य एकर्चाविभितस्तृचौ यथैतदग्निष्टुत्पृषभ इति ॥ ३ ॥

विभक्तावुक्थप्रभावो प्रंमंहिष्ठीयवन्ति राथन्तरेषु साकमश्वमन्ति बार्हतेषूद्वंशीयान्तान्युभयेषां पक्षानुग्रहायाथ यत्र चतुर्थो भागः प्रत्युपधीते नामेधं वा नामेधसदृशं वोक्थान्तेषु चिकीर्षितं भवत्यथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठेत्र स्तोमयोरन्तश्च वेति शाण्डिल्यः पृष्ठ्यस्तोमश्चाभिजितपृष्ठश्च विश्वजित्-

पृष्ठ्यदशरात्रयो रित्येक एतेनैवानुपूर्व्येण बृहद्रथ-न्तरपृष्ठ मभिजितं पृष्ठस्तोमन्यायेन रथन्तर मग्नि-ष्टोमसाम रथन्तरंभक्ति रयं भवति पूर्वत्वात् तद्बृह-तानाध्यशिशायर्थिषीज्ज्योतिष्टोमतंन्त्रपूर्वत्वात्तचया-न्यभिवन्त्यभिरूपाणि तानि जितिप्रवादान्युभयो रभि-जितोऽतिरात्रौ भवतो ब्राह्मण आज्य मुद्धरत्या-भस्तोत्रीयं मानसञ्चर मिति सञ्चारये दिति धान-ञ्जय्यः कि हि यो ऽह्नो रात्रि मुपसञ्चारये दिति न सञ्चारये दिति गौतमो ऽसञ्चारकुशला यज्ञा भवन्ति तच्चैतत् करोत्यभि प्र गोपतिं गिरेत्यभिवतः स्थाने ऽभिवन्तुत्तान मुष्णिहि रथन्तरभक्तित्वान्न अध्यं चिकीर्षति नो पौष्कलं बृहति पृष्ठे तच्चैतत् करोत्युभयभक्ति मिश्रणिधनं सर्वपृष्ठं विश्वजितं रथ-न्तरं मध्यन्दिने बृहदग्निष्टोमसामैव मिव ब्राह्मणं भवति यद्रथन्तरं प्रथमं बृहदुत्तमं मध्य इतरा-णीति ॥ ४ ॥

वैराजं होतृषामैतद् बृहत्परोक्ष मेतच्चैषा मेक-निधन मेकनिधनानि होतृसामानि भवन्ति महा-नाम्नीमैत्रावरुणसामैता अवुक्ता वामदेव्यस्थाने ऽभि-रूपा वैरूपं ब्रह्मसामैतत्सर्वं बृहतीषु सर्वबृहतीप्रायाणि

ब्रह्मसामान्येवं च स्वस्तोमानि भवन्ति रेवतीष्वकावा-
कसाम स्वस्तोमा मप्रवादाहाय गायत्रीष्वग्निष्टोम-
सामैव मिव ब्राह्मणं भवति यद्गायत्र्यो भवन्ति तेना-
यतनान्न च्यवन्त इति तासा मेकविंशत्यचरा प्रथमा
तेनैकविंशान्न च्यवन्ते कथं धर्मा इत्यकर्त्तव्या
इत्येके स्वस्थानानि हि भवन्ति स्थानस्थाधर्मा इति
कर्त्तव्या इत्याचार्य्याः संयुक्तानि भवन्ति संयुक्तधर्मा
इम इत्यथापि कृत्स्नाग्वितान्यधर्माःसान्धंकतराणि
भविष्यन्तीत्यथापि शिथिलानि परोक्षपृष्ठानि तेषां
धर्मकरणेन दृढीभावो भविष्यतीत्यथाप्यस्वस्थानानि
तेषां धर्मकरणेन स्वस्थानानीति चिकीर्षा स्यादित्य-
थापि विश्वजित्कल्प इत्याचक्षते धर्माणा मेतद्रा-
क्लृप्तानीत्यथापि सप्तमे ऽलोपो लोपान्न्याय्यतर
इति न्याय्यतर इति ॥ ५ ॥

अथ मङ्गभूतस्य पक्षिवासां इति कर्त्तव्या इत्येके
विहिता अप्रतिषिद्धा भवन्तीत्यथापेताः पृष्ठधर्माः समा-
धिरित्यकर्त्तव्या इत्यपरं सर्ववेदसंयुक्तास्ते भव-
न्त्यपि चैते खल्वङ्गभूताः सर्ववेदसमिति तं खल्वेते
धर्मा एतस्मिन्नेव द्वादशाहे स्युरिति गौतमोऽत्र हि
संवत्सराणि वदतीत्यूर्द्धं द्वादशाहात् सांवत्सरिका-

णीति धानञ्जय्यः कामं तु कवी द्वादशाहिकी स्यादिति वाहतं तच्च बृहद्रथन्तरवाद्यग्न कालेयं प्रच्यवते ऽनुजिघृक्षितं तत्र भवति तद्यन्मध्यन्दिने ऽच्छावाक स्वच्छन्द इति सत्रासाहीये ककुभि सोढवन्नामाजिति नामास्तिति भवति सफश्चैवा यद्यतिरात्र इति तु भवत्यतिरात्रः स कृत्स्नीभवति तस्मात्सफीभवतः सफं वा विच्यावयिषीत्तदेक उक्थप्रगाथे कुर्वन्ति सोढवन्नाम मा प्रच्योष्टेति पिपीलिकमध्यां करोति दशरात्रन्यायेन तां नित्यायाः पुरस्तान्निदधात्येवं पथ्यावसान मिति तद्यत्र गर्गो चिकीर्षी वा प्रज्ञातकामो * नैव मेवैवतस्मिन्नस्थाने भवति तत्र वामदेव्यं पृष्ठेभ्यः प्रच्युत मनुगृह्णाति वामदेव्यभक्तिन्यहन्युत्पन्नेति वारवन्तीयं सर्वपृष्ठेषु चिकीर्षितं रेवतीसंयोगात् तद्यत् द्विपदासु द्विपदा भक्तिन्यहन्युत्पन्न मित्यनुतन्न मुक्थप्रगाथौ नाना क्रोडग्निसामनी करोति नानात्वर्थो नान्तर मभिजितीत्येतस्य पूर्वाभ्यर्थेनेति ॥ ६ ॥

अथ व्रतस्य स्तोत्रप्रदेशः पञ्चविंशतिस्तोमाः पञ्चकृत्वः पदं पञ्चकृत्वः पूर्वा देवता पञ्चकृत्व

---

* "प्रजापतिकामो" इति ख ।

उत्तरा ऽआप्याहुर्व्यंवस्तोभेत्यदद्दैवत मेवꣳ समाधिः पदद्दैवतस्येत्येते वापि दैवते व्यवस्तोभेदित्येक एवꣳ समाधिर्दैवतयो रित्येवे वाप्याहुर्दैवते व्यंवस्तोभेदिति. शाण्डिल्यो ऽथ कालबविनो यथासमाम्नाय मेवं, कुर्वन्त्येतत्त्वेषां लघिष्ठ मपि च यान्यनुपदस्तुब्धा ऽथा- न्यादर्शयंति तेषा मुभयत स्तोभाब्धसर्क्षन्निगद्म एवास्य पुरस्तात्स्तोभा भवन्ति यत्त्वेव प्रथम मवोचाम. तत् कर्म ते खलु यश्चंदेक आत्मना प्रतिपद्यन्त आत्म- सत्तमान्यङ्गानीति शिरसा वयꣳ शिरो वा अग्ने सम्भवतः सम्भवतीति भवत्यथैवं शिरसा स्तुत्वाथ दक्षिणेन पक्षेणाथात्मनाथोत्तरेणाथ पुच्छेनैकं मध्य आत्मा भवतीत्यथापीके शिरसा स्तुत्वाथात्मनाथ पक्षाभ्या मथ पुच्छेनैवꣳ सम्यक् शिरस्थानकं च भवतीत्यथैते शिरसा स्तुत्वा ऽथ पक्षाभ्या मथा- त्मना ऽथ पुच्छेनैव मिवाङ्गाना मानुपूर्व्य मित्यथ यथै- तद्विहृत्य स्तवते तद्वदय मेतद् ब्राह्मणवदित्यृश्यस्य साम्नि किं प्रत्यक्षं किं परोक्ष मिति कश्च प्रत्यक्ष द्राघितं परोक्ष मपि वेन्द्रेति प्रत्यक्ष मिन्द्र इति परोक्ष मपि वा यथायाम एतदङ्ग माचष्टे तत् प्रत्यक्षं तथैषां स्तुतिः श्यात्तत्सर मिव ते पायुरक्षंजु:

रनास्कन्धः इति यथासमाम्नाय मेवोपेयुरेवं मित्र
भ्राह्मणं भवति यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां
परोक्ष मथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्ष
मिति तत् कुशलं यदस्मिन्नहनि दैवप्रत्यक्षं कुर्युः-
स्तत्र खलु गोस्तन्नं करोतोतदन्तं तन्वतर मन्तरार
मिदं भवति तत्र यो द्रव्यतिकारो निर्वाकार्थी न
भवत्यथापि प्राजापत्यं व्रत मनिरुक्तः प्रजापति रित्य-
थाप्यद्य स्तुतावान्यन्तोक्तं व्रत मिति स्तोम-
कल्पाय चतुर्ऋच माहरति तद्यदेतद् ब्रवं यवं नो
यास्यसीत्येतद्यवप्रवादं पुष्टिप्रवाद मन्नाद्यस्तुताव-
मन्नोक्ते ऽभिरूपं जराबोधीय मुभयसामसु चिकीर्षित
मुभयविधेरेवं हि भवति तदाग्नेययोन्यन्नाद्य स-
स्तावं मन्नोक्ते ऽभिरूप मैकाह्निकाद् व्रतात् पञ्च-
निधनं वामदेव्य मपनयति नाना मन्त्रा मतिमेद-
नायेति भवति तदेकाहे मोषपद्यते यज्ञसामान्या-
द्धीनेभ्यस्तत्र यौत मनुतन्व मा नो विश्वासु हव्य
मित्येतावद् ब्रह्मप्रवादा इतीदान्द मग्निष्टोमसाम
कुर्वन्तस्तृचे कुर्युरेष आवृत्तिन्याय इति दशसु दश-
स्तवरेष्वार्चिकान्यनुगानानेवं वैराजान्यनुगानानि
भविष्यन्तीति षडृचे सर्वस्मिन्नित्याचार्या अर्धर्चेष्वनु-

गानान्येव प्रसंरोधतरो गीताना मिति द्वादशार्चं इति शाण्डिल्यस्तवापराबाग्नेयौ तृचावाङ्गिरेरा ते अग्निं तं मन्य इत्येव मृग् दृष्टीन्यनुगानान्यृतु भविष्यन्तीति षडृचे तु कुर्वन्ति ये कुर्वन्त्यग्ने तव श्रवो वय इति चतुर्थ मेवानुगान तृचे स्यादिति वार्षगण्यो ऽत्र हि निधनवाद वदति वृत मिति भवति स्वरिति भवति शकुन इति भवतीति भक्तयश्च कल्पन्ते नाना सामवच्चैनान्येके ऽधीयत इति ॥ ७ ॥

अथ साहस्राग्निराज्ञाग्निं च वृताग्निं चोपकृतां एव मिव ब्राह्मणं भवति तत्र त्रयाणां सम्पद् ब्राह्मणचोदिता न उपकृता एते स्तोमा भवन्ति ब्राह्मणविहितांस्तृतीयस्योभे सामनी करोति वृतन्यायेन त्रिरात्रन्यायेन च व्याख्यातः मौभयं तन्त्रं पूर्वयोः पङ्क्तिषु ब्रह्मसाम यत् सहस्राक्षरासु ब्रह्मसामित्येव मक्षरसहस्रं सम्पद्यते बार्हतं तन्त्रं तृतीयस्योक्थ्यत्वादग्निं दूतं वृणीमह इत्युभयान्याज्यानीति तत्र पूर्वे बार्हते उत्तरे राथन्तरे इति शौचिवृक्षिरेवं समविभागो देवताना मित्येकदैवत्ये बार्हते द्विदैवत्ये रथन्तरे इति धानञ्जय्य एतदृङ्नयोः समन्वयतोः कुशल यदभ्यास इति व्याख्यातं स्वायन्तीय मपि

चैकादशाक्षरशतानि सम्पद्यन्ते तत्र नित्या सहस्र-सम्पन्मोक्ष मुकथ्येषु चिकीर्षित मुकथ्यदर्शनं चापि च त्र्यक्षरणिधनं त्रीण्युकथानीति सौभरं चैककुभं वेति विचारयन्ति नित्य मंहः सौभरं आय-न्तीयनियोगादुद्वंशीयनियोगाद्वा चैककुभ मिति त्रिरात्रविधेतम उत्तमस्त्रिरात्रिक्यः प्रतिपदस्वाज्यानि चैक मत्रिरात्रिक मिन्द्र मिद् गाथिनो बृहदिति तद्यत् करोति पृष्ठ मत्यविभाजयिषौज् ज्योतिष्टोम तन्त्रं विश्वंशाग्नेस्त्रिरात्र एतत् प्रतिष्ठा विधतरं तन्त्रयो रिति ककुभं माध्यन्दिन मुपाहरति तां मुपरिष्टाद्गायत्र्या निदधात्येव मिय ममुत्र गायत्र्या-नन्तर्हितेनेति तस्य स्थाने द्विपदां करोति पुरुष च्छन्दस इति सतोबृहतीं करोति त्रिरात्रन्यायेन तान्निधने वैरूपात् साक्षाद्रथन्तरं क्रियते सौभरं बृहतो वारव-न्तीयं रेवतीभ्यः पुरस्तान्निदधात्येवं पथ्यावसान मिति तद्यत्र गर्थाचिकीर्षा वा प्रजापतिकामो देव मेवैतानि छन्दांसि युज्यन्त आष्टमिकीस्त्रिष्टुभः करोत्येता रूपसम्पन्ना इति तत्र वामदेव्यं करो-त्येवं हि ब्राह्मणं वदति पवमानवान्ता वामदेव्य मिति स्वारं सौपर्णं मैत्रावरुण सामैतद् वाम-

देवासदृशं मपुरस्तात्स्तोभ मेव बहिःस्तारं यथा वामदेव्यम् ॥ ८ ॥

अथ सांद्यस्केषु याः सद्यः प्रवादा नव प्रवादाः प्रोक्तवत्यो जनइत्यंस्ता अभिरूपा अथ खल्वत्र पृष्ठान्यङ्गाश्चिकीर्षिता भवन्त्यां माभिमानितो य मृतुप्रत्ययानि पृष्ठानि परियाचनार्थानीति तानि यत्र साक्षाद्रूस्तोमान्यभविष्यंस्तथैवाकारवणं शक्वरीभ्यः प्रति वैष्टभवैरूपात्साक्षाद्रथन्तरं क्रियते सौभरं बृहतो वारवन्तीयं रेवतीभ्यः स्वाशिरामर्को वैराजांदाग्यास्य मुष्णिहि मध्यन्दिने स दक्षिणां प्रतिगृह्य विभ्रंशेव स तृतीयसवने प्रायश्चित्तिं चक्र इति कथ मुत्तरयोः साद्यस्कधर्मा इति कर्त्तव्या इत्येके साद्यस्कैश्चाभि परीतौ भवतो यदि चेमे कालसङ्कर्षाद्भवन्ति सङ्कृष्टकालाविमौ भवत इत्यकर्त्तव्या इत्यपरसाद्यस्कौ हि भवतो यदेतदभिपर्यायादिति सर्व एवासाद्यस्कैरभिपरीता भवन्ति यद्येतत्कालसङ्कर्षादित्युच्चावचाः कालविप्रकर्षा एकाहानां तदेवं बहु प्रसज्येतेति विश्वजिच्छिल्पे सामस्तोमे सति साध्यासां बृहतीं करोति कस्य हेतोरिति पुरस्तादापन्नानि वैश्वजितान्यविच्यावयिषन्नविच्यावयिषन् ॥ ९ ॥

जिघांसयंस्त उत्तरस्तृच या इत्तवत्यः क्रूराणि च सामान्यभिरूपाणि तानि त्रिकाण्याज्यपृष्ठानि करोत्येवं सुपराञ्चि भवन्ति वज्रोक्तं च पञ्चदश मभि सम्पद्यते चतुरः पञ्चदशामर्षा सोम द्युमत्तम इति माध्यन्दिनीयाहन्यहे भवन्तीति शाण्डिल्यायन ऋषभ्यृषेर्य्यर्थानुस्नातकाः कुर्वन्ति भागविलोपे चोत्पन्ना भवतीति पराचीषु रथन्तर मिति द्विपदोत्तरासु पराग् भवति ककुभावेवेति गौतमोऽनभिवर्त्तश्चैतद् ब्राह्मण मिति पवमाने रथन्तर मित्युद्धृत्य बार्हतानि स्यादष्टे ऽस्वपदस्तोभिः शाक्वरवर्णस्य त्रिणिधनानुग्र-हाय शक्वरीणां च पवमानान्त्यं वा रथन्तरं तज्जास्येव मिव ब्राह्मणं भवति यद्वै महावृत्तौ समृच्छेते बहु तव विभग्नं प्रभग्नं शेत इति यदा वा अजामि यौधाजयस्यामे दैर्घश्रवसं यदन्तरा सोमा यन्तीत्यु-परिष्टादनुद्वरन्वा बार्हतान्यनुकल्पयेत् तत्र पौरुमद्गं तृचसमाप्तये भ्रातृव्यवंश्यास्मिन् ब्राह्मणं दर्शयतीति यौधाजयापेतं वोत्सधमध्यं कृत्वा पवमानान्त्यं रथन्तरं माध्यौगवस्य निधिश्रो वृत्तिग्रहणात् वाम-देव्यं स्वचिं वाभिवदनार्थं इति धानञ्जय्यः प्लवश्चेद् ब्रह्मसाम स्यात् त्वमिन्द्र प्र० तूर्त्तिष्विंश्येताश्चेता

रूपसम्पन्ना इति श्यैतयोनौ वा बृहत्पृष्ठत्वादथैष एकत्रिकः प्रजापतीप्सा मुपक्रतस्तत्रैतावुत्सेधनिषेधौ प्राजापत्यादङ्गो निषेधो ब्रह्मसाम श्रायन्तीयश्च्यैषा श्विवत्रती प्रायश्चित्तकृतो ऽभिरूपेत्यतो यो द्रव्यविकारः प्रजापतीप्सया स भवति ॥ १० ॥

अथ व्रात्यस्तोमास्तत्र षोडश आग्निः स्तोमः स एष द्वात्रिंशो विकृतस्तं मच्छावाकसाम्नो निदधात्येतदानुष्टुभं स्थान मित्यनन्तरा द्वात्रिंशप्रयुक्ता भविष्यतीति पञ्चसानयोर्ज्योतिष्टोमानीतराणीति तत्रया वीर्यप्रवादा बलप्रवादा गणप्रवादा द्रविणप्रवादाः शुचिप्रवादा निषमावत्यः प्रचितारभिव्याहारा अभिरूपास्ता यानि च गणसामानि हूतवन्ति तत्र यश्छन्दो योगविकारो गणेचिकीर्षया स भवत्यपि च चैन्द्रीचिकीर्षया ऽथ खल्वाह यन्निरुक्तं निधन मुपेयुर्गृहपतिरेवर्भुयाद्रुपेत्तरान् घ्नीतेति कस्येदं ब्राह्मणं स्यादिति नौधसप्रतिषेध इत्याचार्यास्तद्धि निरुक्तनिधनं भवतीति नेद मित्थेथाषर मां इन्द्रा इत्येवास्य निधनं विराड्स्तदात्तथा स्यात्तन्निरुक्तं स्यादिति यथासमाम्नायं त्वेवैव मनिरुक्त मिति द्वावग्निष्टोमस्तोत्रीयौ समामनामो द्वये व्रात्या भवन्ति

शीर्षादृयस्त्वैषीकयोवंयस्त्व शीर्षादीनाᳬ सतोबृहती-ष्वग्निष्टोमसामं कुर्यादिति धानञ्जय्यो ज्यायसस्तान् ब्रुवत एषीकया दाशां प्रगाथबृहतीषु कौनो विद्या-दिति स्वयं ब्रुवीरन् ज्यायाᳬसः खलु शीर्षादयो ब्रुवते षोडश इत्युत्तरस्तत्र खलूक्थं करोति षोड-शयोः स्थाने चिकीर्षᳬस्तावादावसानयोर्निदध्या-द्येवᳬ सयाधिः पवमानाच्छावाकसाम्ना मिति कनिष्ठयज्ञ उत्तरो ये तु खलु जन्मना कनिष्ठा ये हो वयसेति ये जन्मनेत्याहुस्ते हि कनिष्ठा इत्याचक्षते यथाहुर्ये वयसा ब्रह्मचारिणो हि व्रात्या भवन्तीति व्राध्यातौ षोडशाव च्छावाकसाम्नो हरति स्तुध्यᳬ स्तोमसᳬ धात्तत्र महताᳬ स्वᳬ स्तोमं करोत्याशी:-स्तोमं मा प्रच्योष्टेति विहरति श्यावाश्वान्धीगवे ऋचा वोप्सन् ॥ ११ ॥

ज्येष्ठयज्ञ उत्तरो ये तु खलु जन्मना ज्येष्ठा ये हा वयसेति तत्पूर्वेणैवं व्याख्यातं तत्र द्वादशरात्रिकाᳬ स्तोमानुभेव सामनौ करोति ज्येष्ठयज्ञं कृत्स्नं चिकीर्षन्नथापीमं द्वात्रिᳬश माशी:स्तोमᳬ साचाज् ज्येष्ठयज्ञे ऽचकीर्षीत् स यादीयमानः सर्वांस्तोमाना-द्रायेत्तां स्तु यदेवं मयुक्त एव मनवकारेणारोहो भव-

त्यष्टाचत्वारिंशात् परस्तादष्टाविंशाविति त्रिणवत्रय-स्त्रिंशावभिरूपान्तो द्वाविंशो वाचिकीर्षितं कनीयांसौ स्तोमावुपागुरिति नु भवति, त्रयस्त्रिंश-द्वात्रिंशाविती वैतद्भवति द्वे त्रिणवत्रयस्त्रिंशे द्वे द्वात्रिंशत्त्रयस्त्रिंशे इति वा खलु तत्कुर्युः सर्वान्वैवा-रूढानुपेयुरित्यकुशला ऽनुव्याहरन् कौषीतकीन्मन्य इति धानञ्जय्यं एवं ह्येवैषु सत्सु रोहो भवति तत्र यो रोहो ऽर्थकारितः स भवति कथं मनिष्टप्रथम-यज्ञानां व्रात्यस्तोमा इत्यकर्त्तव्या इत्येके ऽनारभ्य वदन्ति य एतेनानिष्ट्वेत्यथाप्येषां ज्योतिष्टोमे प्रति-पद्विधीयते ऽथापि यथा मानाहिताग्नीनामेवमप्य-निष्टप्रथमयज्ञाना मितिकर्त्तव्या इत्यपरं प्रायश्चि-त्तार्था इमे भवन्ति प्रायश्चित्तं सु खलु पूर्वं विधीयते ऽथापि ज्योतिष्टोम एव प्रायश्चित्तस्य पूर्वत्वं दर्शयति यथा कलशे दीर्णे विरिक्ते ग्रावापि शीर्णा इति यदे-तद्य एतेनानिष्ट्वेति प्रकृतिभूतानामेतद्भवति यदे-तत् प्रतिपद् विधीयत इतीष्ट्वा व्रात्यस्तोमेनेत्येतदुप-पद्यते यदेतद्यथा नामाहिताग्नीना मिति सिद्धि-कारित मेतद्भवति ॥ १२ ॥

अथाग्निष्टुत्स्य या आग्नेय्यः पठिताभिर्व्याहारा

ज्योतिष्टोमीभिः सदृशंव्यञ्जना यथास्थान मभिरूपा-
स्ता रुद्रवतीस्त्रिष्टुभः करोति रुद्रो मरुतां पिते-
त्याहुस्तेन मरुत्वदनुग्रह इति गायत्रीष्वग्निष्टोम-
सामैतदाग्नेयं छन्द इति स यदेता उप त्वा जामयो
गिर इत्येता वायव्या इति तद् वारवन्तीयं गायत्री-
सामैक मृचा स्तोत्रीयं तेन प्रच्युतं यज्ञायज्ञीय मन्त्यं
करोत्यत्र हि सं तृचतां लभते तदेतत् स्तोमसंरोध
एव मेव भयत्यैन्द्रीषु सुत्येति सोऽयं पूर्वं स आग्नेय्य-
स्तोत्रं निरैन्द्रं भविष्यतीति स यदग्निष्टोमस्सामान्ता-
ख्यानि कर्माणीति सप्तदशे विषमे स्तोमे सत्यन-
भ्यासं बृहतीं करोति कस्य हेतोरिति न ह्याग्नेयी
साभ्यासा विद्यते तस्यां चत्वारि सामानि तृचावभित
एकर्चौ मध्य एवं तृचप्रायणं तृचोदयनं भविष्यतीति
त इमे पञ्चानुवाकाश्चत्वारः कल्प्याः स एष प्रथमः
सर्वेषा मेव सार्ष्टिः स्यादपि वा प्रथमस्य द्वौ स्यातां
कथं भक्त्या इत्याग्नेय्या इत्येक एवं यथार्थं भवत्यथा-
प्यत्र सुषिप्रतिषिद्धरूपाण्यनाग्नेयानि भवन्त्याग्ने-
यानि यथा हविःस्तुतिः पवमाना इति यथाप्रक्र-
तीतरपरं भक्त्यविशेषान् विदधन्नाग्निष्टुत्सु विदधा-
तत्रथापि क्रतावेता यथार्थं भवन्ति यथा मैत्रावरुणस्य-

स्याग्निष्टोमसाम्नीत्युत्तरेष्वग्नय इति स्थाने सुब्रह्म-ण्यायां देवा इति ब्रूयादैन्द्रत्वादग्निष्टोमसाम्न इत्येके ॥ १३ ॥

॥ इति निदानसूत्रे षष्ठः प्रपाठकः ॥

## ॥ अथ सप्तमः प्रपाठकः ॥

अथ त्रिवृतस्तेषां प्रथमस्य यो द्रव्यविकारो निर्वा-कार्थं न स भवति पुरोधाकामयज्ञ उत्तरः स्थपति-सवो वयꣳ समानांः श्रेष्ठो * संवृणीरन् ब्रह्मसवो वा-ब्राह्मणस्य यज्ञेन जिजनिषमाणस्य त्रिवृतः स्तोमꣳ सम्पद्यते लघुरीप्साया मभिरूपो यः स्तोमस्याय मेष गच्छति सः पुरोधां अः स्थापत्य यस्य तु स्याद् ब्रह्मसव इत्येषा ब्रह्मणो भक्तिरित्यनुसवनं दक्षिणा ददाति कस्य हेतोरिति बृहस्पतिरभिषिच्यमानो देवगणेभ्यो दक्षिणा आजहार वसुभ्यः प्रातस्सवने रुद्रेभ्यो माध्य-न्दिने आदित्येभ्यस्तृतीयसवने ऽश्वद्वादशा मध्य-

* 'श्रेष्ठा' ख ।

न्दिने ददाति. दक्षिणा वेलाया मन्याधित्वन्मन्यते श्येनेनैषोद्व्यसमुद्देश उक्त उद्धरति श्याक्तं वर्ण्णं साद्यस्कसाम तद्धरति तच्चैतज्जराबोधीय मेतद्गायत्री-सामापन्न मपि च रुद्रवद्योनिवधार्थे ऽभिरूप मुद्धरति वषट्कारणिधन तस्य स्थाने सप्तहङ्करोतीत्यतद् बृहता समानयोनिवधार्थे ऽभिरूप मुद्धरति स्वारे सप्तचं-नवर्चा करोत्येते प्राणोक्ता इति ते बृहत् तस्य स्थाने वषट्कारणिधन मेषा देवेषुर्भवति ता माशीर्ध्वनि-ह्वसन् ॥ १ ॥

सर्वस्वारे सप्तर्चंनवर्चान् करोत्येते प्राणोक्ता इति तेषां विलोपेन प्राणविलोपो भविष्यतीति स यत्प्रथ-मांस्तृचानेते रूपसम्पन्ना इति चतुर्ऋच मैन्द्राग्नं समामनामो. प्रवत्यासां द्वितीया ता मुद्धरति सर्वाः प्रवत्यो भविष्यन्तीति गायत्रीणां पृष्ठापदानाद् बृह-तीषु मैत्रावरुणसाम करोति. त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षंस्तच्चैतन्मेधातिथं स्वयोन्युपन्न पुरस्ता-देतत् स्थान मनभिवतीष्वप्रवतीषु शौल्किकपृष्ठानि स्वयोनीनि श्चिकीर्षन् विराड् *. बृहतीष्वग्निष्टोम-साम प्रागादनुप्रहरतेति ता यदावर्त्तयत्येवं प्रवृत्या

* "पराक"–इति ख ।

प्रक्रम इति तत्र यज्ञायज्ञीय मन्त्रसमाधये तस्या-क्षरसंसङ्गेन प्रस्तावयति प्रगाथीकाराय पूर्वस्या-श्वान्यङ्गे वा याश्चाघ मेषोऽक्षरसङ्घसङ्गस्तद्यत्र यच्चैषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैव मेवैषां प्रस्तावयति दैर्घश्रवंसं स्वासु यदि जीवेदिति तु भवति न चेच्छक्नुयात्तु मत दीर्घं शृणुयादित्यपि वा प्रायणार्थ मेव स्यात् स्वारञ्च हि भवति प्रवह्योनि वेति ककुबुत्तरासु ककुबुत्तरास्थानं हि सर्ववृहती-ष्वेक एवं स्वर्गकामयज्ञे रोहोऽपि वा स्वर्गोक्तां वृहतीं स्वर्गकामे यज्ञेऽचिकीर्षन्ति पुरस्तात् नाना वृहत्य इति वा तन्त्रे विप्रतिपद्यन्ते प्रथमतन्त्र मित्येके गायत्रीभ्यां जानीम इत्याशीस्तन्त्र मित्यपरं प्रवंती-भिरयं क्लृप्तस्ता एताः प्रंवत्य इति ॥ २ ॥

अथातश्चातुर्मास्यानि स एष षडहो विहृतस्तत्र षाडहिकान्त्सोमप्र करोति षडहन्यायेन ताः स्तत्र यदेवं प्रयुङ्क्त एवं सोमो भवत्यथापि नाना दीक्षावभृथानीमानि सर्वाणि भवन्ति तत्र सर्वाण्य-ऽहन्युपक्रमः सोमेन प्रतिक्रामिषोदयाप्येव मेनाननव-च्छिन्नानन्ततो ऽध्यवस्यंतीतुपयन्ति तन्त्राणि पृष्ठानि संस्था इत्यङ्गां विक्रमादैकाहिकान्येकाहे वैराजि-

काणि द्विरात्र उद्धरति रात्रि मपरिकाण्डतया द्रह्यस्य त्रिरात्रिकाणि त्रिरात्र उद्धरति वामदेव्यं चास्यमन्त्राच्चापरिकाण्डतया त्र्यहस्य नाना ब्रह्म-सामानि नानार्थं श्यैतनौधसवर्णानि बार्हद्रथन्तर-पृष्ठात् यौक्तस्रुच मेवादाभ्यरात्रिकं तदेतत् पूर्णदर्षा-नुग्रहाय यम्ध्रास्तु यचीपत इति प्रथमस्याक्ष्णो ब्रह्म-साम स्तोत्रीयेऽे वैश्वदेवस्यायं स्थान मापन्न एषां विश्ववती भवतीति पञ्चप्रतिपत्कान्यहान्यात्वभी-ज्यायां पञ्चर्तुः संवत्सर इति षष्ठा मक्षां प्रतिपदः षड्डतुः संवत्सर इति त्रिष्टुभं वैश्वकर्मणीं करोति न हि गायत्री विद्यते समापद्यन्ते चिराचे भागा-स्तदनु द्रव्याणि हाविष्मतं द्वितीये ऽहनि त्रिरात्रस्य कुर्यादिति धानञ्जय्य ऋद्धिसामाप्रच्येष्टेति यौक्ताश्व मेवेति गौतमः कृतं हाविष्मतं द्विराचे तृतीयस्थानञ्च हाविष्मतं त्रिराचे तचैतत् संहितं शुनाशौर्य-सन्तानाय समुद्रेयो वसूनां प्राणाः शिशुर्महीना मिति पञ्चमषष्ठाभ्यां मुष्णिक्-ककुभौ षडहसमीप्सुः प्रत्याहरत्येतेन न्यायेन द्विरात्रप्रभृतिष्वहर्गणेष्वेते भवतो न चेत् कृतागमो भवति द्विपदातिच्छन्दसो दशरात्रन्यायेन ते जगत्याः पुरस्तान्निदधात्यन्त-

च्छन्दसी अन्त इति ते ऽयं न सर्वान्ते नासवनं च्छन्दो-ऽन्ते ऽचिकीर्षीत् तचैता वाजदावर्यो ऽन्तान्विता अयां रुचेति निध्यवत्सा स्वयोनेये प्रतेन न्यायेन चिराचप्रभृतिष्वहर्गणेष्वेते भवतो न चेत् स्तोम-सरोधो भवति ॥ ३ ॥

अथैते सप्तदशास्तत्र बार्हतेष्वाष्टमिकं पञ्चचं करोत्येतद् बृहद्भक्तिनो ऽन्त इति तात्तीयिकं रथन्तर-पृष्ठेष्वेतद्रथन्तरभक्तिन इत्यनिरुक्तः प्रथमस्तच यो द्रव्य-विकारो निर्वाकार्थे न स भवत्यथ खल्वाह मारुती भवति पौषी भवति वैश्वदेवी भवतीति केनो विद्यादे-तद्देवत्या इमा भवन्तीत्येतद्देवत्येषु समाम्नाता इति यानि गोः सामानि तानि सामान्यनुपृष्ठं संहित मेवैतदाग्निष्टोम्यात् क्रियते स्वर्गकामयज्ञ उत्तरस्तच यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवत्यथ खल्वाह सोमपीथ तदनु द्रव्याणि हाविष्मतं द्वितीये ऽहनि राजन्य कुर्यादिति धानञ्जय्य ऋद्धिसम मां प्रच्योष्टेति यौक्ताश्व मेवेति गौतमः क्रतं हाविष्मतं द्विरात्रे तृतीयस्थानं च हाविष्मतं त्रिरात्रे तचैतत् संहितं शुनासीर्यसन्तानाय समुन्वेयो वसूनां प्राणाः शिश महीना मिति प्रज्ञमषष्ठाभ्या मभिक-

ककुभौ षडहसमीप्सुः प्रत्याहरतेऽतेन न्यायेन द्विराव-
प्रभृतिष्वहर्गणेष्वेते भवतो न चेत् कृतागमो भवति
द्विपदाति छन्दसी दशराचन्यायेन ते गत्याः पुरस्ता-
न्निदधात्यन्तच्छन्दसौ अन्त इति ते यत्र सर्वान्तेन
सत्र नच्छन्दोन्ते चिकीर्षीत्तत्रैता वाजदावर्यौ उन्ना-
विता श्रैया रुचे स्याविदोद्वायेत्यनन्यत्र भावा ये
त्वेतदवोचदिति स्वर्गकामयज्ञ एवोत्तरस्त्वेमे सामनी
बहुदक्षिण्यादपि वा स्वर्गकामयज्ञस्वादेवैव मित्र
ब्राह्मणं भवत्यनड्वाहौ वा एतौ देवयाजी यज-
मानस्य यद् बृहद्रथन्तरे इति वैश्ययज्ञ उत्तरएतस्य
क्षत्रवरथन्तर माभि त्वा पूर्वपीतय इत्येतासु कुर्या
दिति लामकायनो यथा वा अप्ययायाः शूद्रस्तल्प
मुद्दिशेदतो दैशीय मतन्त्र एतद्रथन्तरास्वेव कुर्यादेतासु
त्वेव स्यादेतासां हि स्थान मापद्यते चेतां प्रोचे
पृष्ठे प्रउग इति सर्ववृहतीषु नान्यद् बृहद्रथन्तराभ्या
मंहति पञ्च मुत्तरासु स्यात्तं खलु द्विश्रुवतीभिः कल्प-
यत्येतद् भक्तिर्वैश्य इति तत्र विप्रतिपद्यन्ते ज्योति-
ष्टोमतन्त्र मित्येके गायत्र्यौ जागीम इत्याश्री-
स्तत्र मित्यपरं विश्रुवतीभिरथं क्लृप्तस्ता एता विश्व-
वत्य इति तत्र यो द्रव्यविकारो वैश्यदेवीचिकीर्षया

स भवति यान्यायुषः सामानि तानि सामान्यनुतत्वं यान्यन्यानि पृष्ठानि ब्रह्मसामभ्यां विशोविशीय मुत्तरयो मग्निष्टोमसाम ककुबुत्तरासु ककुबुत्तरास्थानं हि स्वर्गकामयत्न उत्तरस्तत्र खलु गोस्तक्कारोऽयेतदन्ततन्नतर मन्तंविधीऽयं भवत्यनिरुक्तं प्रातस्सवन तच यो द्रव्यविकारो निर्वाणार्थे न स भवत्यथैतद्देवस्थानं स्थितनिधन मुताखिक्कौस्तिष्ठेदिति तस्य रथन्तरं पृष्ठं वाजपेयसाम हि बृहत् करिष्यन् भवत्यग्नोतोऽर्कौ वामोत मन्न स्वं नश्चित्र उत्येति वारवन्तीय मग्निष्टोमसामैता राधस्वत्यः स्वर्गकामयत्नो ऽभिरूपाः ककुबुत्तरास्थानं हि सर्वबृहतीष्वेके तद्व्याख्यातं सर्वस्वारेन ऽनुतंत्र मुक्थप्रायाय * ॥ ४ ॥

पृथैषो ऽभिषेचनीयस्तस्य द्वात्रिंशाः पवमाना अनुपूर्वं मावृत्तिस्थानेषु पञ्चदशप्रभृतीन् भागस्तोमानेते माम्ना खरना इति तत्रोभे सामनी माङ्कदास्तिवाद्यथाप्युभे ईसायी मभिरूपे उक्थसंस्थं करोति द्वितीयेय मिज्या तत्र द्वितीयां सख्या मिति व्याख्यातम् बहिष्पवमान मन्यत् कविमतस्तत्र खलु

* "मुक्थप्रायः"—इति ख।

गस्थद् भाल्लविनं आग्नेयीं पावमानी मुद्धरन्ति यथा चिवृतं वं वय मुद्धराम: पृष्ठेभ्य इयं मत्येवं पृष्ठाना मविलोप इत्यथापि सोमप्रधानतरश्छन्दस इत्या-नुष्टुभं पर्यासङ्करोत्यानुष्टुभो हि राजेति तासां मध्यमां सुत्तमां कुर्यु: सूर्यवत्यन्ते ऽभिरूपे सन्धार्या-न्विताभ्याजयान्यथ खल्वत्र राजसामानि करोति राजसूयो राजसामानीत्येकादश करोति त्रिष्टुप्-सम्पन्नानि त्रैष्टुभो हि राजेति सर्वच्छन्दसानि करोति सर्वस्य कृत्स्नीकाराय न पाङ्क्तं करोति न हि पाङ्क्तं राजसाम विद्यत एक मुदाहरन्ति सत्यश्रवसो वाय्यस्य मह्रे नो अद्य बोधयेति राजसूययाजी स बभूव नेह राजसूययाजिनां सामानि क्रियन्ते बार्ह-तानि भूयिष्ठानि करोति सवनच्छन्दो बृहत्यथाप्ये-तन्माध्यन्दिनच्छन्दो भवति बार्हतानि वाव भूयि-ष्ठानि लभत इति द्वे गायत्रीसामनी करोति द्वे बहि-ष्पवमान मुखयोगायत्र्यौ भवतस्ते कुशल यदनुपूर्वं पंक्त्व माध्यन्दिने पञ्चाभव एवं रोही भवति देव-स्थानं वरुणसाम सोमसामेति द्वेवरादाप्. सैन्धुक्षितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम सद्राजसाम-सूपसङ्गायते सत्रमार्गेण चचार राजसूययाजीव बभू-

वेति दैवोदासं वाध्र्यश्वं वैतहव्यं त्रासदस्यव मिति मनुष्यराज्ञां द्वैपद उक्थप्रगाथो विभक्तशाशङ्क मिदं कर्म द्विविधेन प्रतिष्ठति तच्चैतत्कक्षीवतासामाहीयं सोद्भवम्ब्रह्म राजयज्ञेऽभिरूप मनुपृष्ठ मितरे सत्त्वोविशीयं दशपेयस्य मध्यन्दिने विशीयं राजयज्ञेऽभिरूपं वारवन्तीय मग्निष्टोमसामस्वाँखेषु वारवन्तीय मिति ॥ ५ ॥

प्रतीचीनस्तोम उत्तरत्र खलु बृहत्पृष्ठं करोत्येतत्राति: क्षत्रिय इत्यतिरात्रसंस्थं करोति चतुर्थीय मिज्या तत् चतुर्थी संस्था मित्यथापीदं द्वितीयं यज्ञस्थानं यदहीनो द्वितीयो वर्णः क्षत्रिय इति ज्योतिष्टोम तत्र मेतदिह भक्तितत्त्वयोरय मु लोकः क्षत्रियस्येति स्तोमकारित ग्रावाणो व्युष्टिद्विरात्र उत्तरस्तत्रामु मेव द्विरात्र माहरति तत्र दशस्तोत्रीया उपाहरति संवत्सरसम्पदे चतुर्विंशा वृत्तरी पवमानो करोति बहिष्पवमानसमाधये सप्तदशत्रिणवौ प्रत्यावर्तयति तावनन्तरयो: स्तोत्रयोरनुग्रहार्थैकविंशान्युक्थानि करोति विभक्तशाशङ्को द्विरात्रस्तत्रामु मेव प्रतिष्ठास्तोम मभि प्रायुङ्क्तायैतद्विशोविशीयं राजयज्ञेऽभिरूपं क्षत्रियस्य धृति: किमर्थं इत्या-

लुब्धजनपदोऽयथ् राजा तस्य ज्वसंयमार्थः चमस-यमार्थः ॥ ६ ॥

अथातो द्वन्द्वा इत्याचक्षते तेन सर्वे द्वन्द्वाद्वन्द्वे मिश्रास्तु भवन्ति यौ यावेषाᳪ समान मर्थ मुपक्लृप्तौ तौ तौ द्वन्द्वौ भवतो राज्यकामयज्ञः प्रथमस्तस्य यद्देवं-विधः स्तोमयोग एव मष्टावेकविᳪशान्तसम्पद्यत इति सप्तदशं पवमानेषु निदधात्येष विड्-स्तोमो भवति विट्कामो राजा ऽयापेयते ग्रामां इव सुत्याया स्तपवमानाः सम्पूर्णाश्छन्दोभिः सामभिरिति तत्र विट्स्तोमᳪ सप्तदश मचिकीर्षीदनुपूर्वं मावर्त्ति-ष्यानेष्वतिशिष्टान् भागस्तोमानेवं चतुष्टोमो भवति विभᳪशाशङ्क मिदं कर्म स चतुरेण प्रतिष्ठेति व्याख्यातं मौभेयसाम्य मभिषेचनीये ज्योतिष्टोमं तत्र छदयाख्यातं केशवपनीये ऽन्नाद्यकामयज्ञ उत्तर-स्तव चतुर्कंच माहरत्येतदन्नाद्यसᳪस्ताव मित्या-मह्रीयवादुत्तर मौभीक मेतदृष्टिसᳪस्तावं वृष्टिज मेव मन्नं माम्बीगवादर्कपुष्प मेतदन्नाद्यसᳪस्ताव मिति प्रजातिकाम * यज्ञ उत्तरस्तवैकर्च मुपाहरत्येषा वृषण्वती प्रजातिकाम + यज्ञो ऽभिरूपान्तरिक्षप्रवा-

---

*, + "प्रजापतिकाम"—इति ग ।

दान्तरिक्षायतना गन्धर्वाप्सरस इति तत्र यो द्रव्य-विकारः प्रजाति कामं यज्ञत्वात् स भवति शुश्रुत्सद्यज्ञ उत्तरस्तस्य द्वादशं माध्यन्दिनं सवनं त्रिवृती अभित एव मिव ब्राह्मणं भवति यैकादशी या द्वादशीस्येका-दशीः प्रातःसवन उपसञ्चीत द्वादशीस्तृतीयसवन एवं गरस्य व्यपादानं सिध्यतीति तदपि शश्वदध्वर्यव उपाहरन्ति सोमो वै त्रिवृतः स्तोमो द्वादशो यत् त्रिवृतो द्वादश मुपयन्ति पुनर्द्वादशात् त्रिवृतं तस्मा-देष पुनःस्तोम इत्युक्थ्यसंस्थं करोत्येव मेतासां स्तोत्रीयाणां व्युपादानं सिध्यतीति सोमकल्यायैकं साम मध्यन्दिन मुपाहरन्ति स यज्ञमेधातिथ मेतस्य-रिष्टवती योनिः प्रायश्चित्तकृत्ये ऽभिरूपे ऽस्येतो यो द्रव्यविकारः शुश्रुत्सद्यज्ञवान्त्स भवति ॥ ७ ॥

पशुकामयज्ञ उत्तरस्तत्र चतुष्पर्यायान्स्तोमान् करोति चतुष्पादाः पशव इति तदपि शश्वद् ब्राह्मणं भवति यच्चतुश्चतुर्हिङ्करोतीत्यथ खल्वेनानुष्टुभः प्रति-पदः करोति पशुकामयज्ञो चतुष्पदा अभिरूपा इति तास्तिस्रः सतीश्चतस्रो गायत्रीः करोति गायत्री-स्थाने हि भवति वारवन्तीयं यज्ञायज्ञीयचतुर्थे-ष्वुक्थस्तोत्रीयेष्वेव मिव ब्राह्मणं भवति नोक्थ्यो

नाग्निष्टोम इति यद्वु वारवन्तीयं पशुसंस्तावं चापि च स्तोत्रीयाणां सन्निवारणाय पशुकामयज्ञ एवोत्तरस्तच्च चतुर्थं च माहरत्येतत्पथ्यच्छन्द इति षोडशिसंस्थं करोत्येव मिव ब्राह्मणं भवति नोक्थ्यो नातिरात्र इति पशुकामयज्ञस्त्वाद्वायज्ञ उक्थप्रणयः पशुकामयज्ञावेवोत्तरावपि वा द्विरात्राग्नि मुप्रकृतौ स्याता मुभयेषामानि ज्योगगात् तत्र सप्त-सप्तदशौ स्तोमौ करोत्येतौ पशुसंस्तावा वित्येक-विंश मन्त्रस्य बहिष्पवमानं करोति त्रिकं होतु-राज्यं समायत्विकाद्भौ व्यावर्त्तयिषन्नेतस्मिं-स्तदेकविंशे पराक्रम्य त्रिकेण वज्रेण बलं बिभे-देति लामकायनस्ता उ सप्त-सप्तदशावेव सम्पदेति नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति च न च सञ्चारयत्येकाहन्यायेनाहः सञ्चारणं द्विरात्र-न्यायेनासञ्चारणं जनुषैकयौ द्विरात्रन्यायेनौदला औगवे द्विरात्रन्यायेनाश्रित इति काव मन्त्य मेषा सामन्यां * द्वचप्रथमा पशुप्रवादिति सत्रासाहीय सुष्ये द्विरात्रन्यायेन श्यावाश्व-क्रौञ्चे द्विरात्रन्याये-नाये गोराजाय स्तविष्यत इति काव † मन्त्य मग्रेग.

---

* "सामान्या"—इति ख। † "राव"—इति ख।

इत्यध्येयं भवतीति शाण्डिल्यायनो गोप्रवादास्तु स्नातकाः कुर्वन्तीति ॥ ८ ॥

अपचितिकामयज्ञ उत्तरस्तत्र चतुर्विंश-षष्ठान् करोत्येवमिव ब्राह्मणं भवति वि-ह्वयन्तीति चतुर्विंशश्चिंशावावितीवैतद्भवति चतुर्विंशं पवमानयोर्निदधाति तेन प्रच्युतौ त्रिवृत्सप्तदशावाज्यपृष्ठेष्वनुगृह्णाति ज्योतिष्टोम तन्त्र मेतदपचिततरं तन्त्रयोरिति स्तोमकारित आवापोपचितिकामयज्ञ एवोत्तरस्तत्रोक्ताः स्तोमास्तत्र यदेवंविधः स्तोमयोग एवं विराजं सम्पद्यत इति द्विपदाः करोति दशरात्रन्यायेन स यदेता एवा दशरात्रावमाने दृष्टा इति तच वारवन्तीय मन्तसामान्तच्छन्दसि सूर्यवत्यो दशरात्रन्यायेनाग्नाभियज्ञम उत्तरस्तत्रोभे सामनी करोत्यग्नाभीज्यां कारश्चीचिकीर्षत् तथापुरभयसामाग्निर्भवत्युभाभ्यां हि परिगीयत इति ज्योतिष्टोमं तन्त्र मेतदाग्नेय मिति स्वारं सौपर्णं पथिसाम पञ्चभीष्टाया* मग्नेर्वत मग्नाभीष्टायां†स्वाशिरामर्कोऽग्नाभियज्ञे व्रते दृष्टो भवत्यग्नाभियज्ञ एवोत्तरस्तत्र ज्योतिष्टोम मेवाहरयेतदाग्नेय

*, † "भीज्यायां"—इति ख।

मिति त्रिवृत्पञ्चदशौ वाज्यपृष्ठेषु सप्तदशेन कुर्मो व्याख्यात मौभयसामं ज्योतिष्टोमायं विकृतस्तत्रो-दल मनुष्टुभि तृचसमाप्तये तदेतदष्टमात् पृष्ठा-न्वितम् ॥ ८ ॥

राजयज्ञ उत्तरस्य द्वे स्तोत्रीये उपाहरति ककुद्-रूपं द्विदशयिषन्नपिवा सदोविशीयसामान्ते गच्छ-मात्रे सप्तदश कारयेतां विषमे स्तोमे सत्यनध्यासां वृहतीं करोति ज्योतिष्टोम्यात् तस्याः सामकल्पो * व्याख्यातो ऽग्निष्टुति व्याख्यात मौभयसाम्य ज्योतिष्टोमायं विकृतस्तत्र गौरीवित मनुष्टुब्येतदृष-भोक्त मिति वैश्ययज्ञ उत्तरो वैश्यस्य राजमातृस्य स्वाराजा मौपसतो यज्ञः स्यादित्याहू राज्ञ एव खल्वयं संविरतस्य साहसिक्याद्विड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यो ऽभिषिञ्चनीयं प्रत्युपधावति सवसामान्याद्द्वांविंशादपमादनुष्टुभः प्रति-पद्दो ऽपयन्ति कुश्मल यस्तुपवती मेषा राथन्तरी राथ-न्तरी वैश्य इति व्यत्यासेन नित्यां वृहतीं करोति समो हि स्तोमो व्याख्यातापुत्तरौ राजयज्ञ उत्तरस्तं खलु वृहत्पृष्ठ मिन्द्रन्यज्ञाभिः कल्पयतेऽतन्त्रिः

* "साक भल्पो"-इति ख ।

यस्मै ऽभिक्रम मेव मैथ पञ्चोत्तरो ऽपि वा नाम्नात-प्रायश्चित्तये यन्नानाम्नातं भय मागच्छेद्यथा माटव मा. अगाम यथा विहनुशिरो यथा वयःपतनं तद-प्येवं मिव ब्राह्मणं भवतीन्द्र मदिश्यो माया कस-न्तोति शाण्डिल्यायन एवं नून तद्विदाञ्चकारेति ह स्माह धानंजय्यो यदर्थं इम माजहारानाम्नात द्वत्र खल्वयं योगो भवति तत्र त एव स्तोमा ये पूर्वस्य तान्तु यदेवं प्रयुञ्ज्ञ मायावेकाहौ व्यावित्त-ग्रिष्ठस्तन्त्वे विप्रतिपद्यन्त उभयसामतन्त्व मित्येके प्रलवत्यो हौता माध्यन्दिनीया इत्याशीस्तन्त्र मित्य-मन मनाम्नानप्रायश्चित्तये ऽथ तत्रानाम्नातयोगांश्चि-कीर्षन् गायत्र्याः स्थाने द्वे बृहत्यौ निदधाति ते संयुज्य तिस्रो गायत्रीः करोति गायत्रीस्थानं हि भवति तत्र यो द्रव्यविकारो नाम्नातप्रायश्चित्तये स भवत्यपि च विजिघांसया ॥ ११ ॥

अभिचरणीयावेवोत्तरौ तयोः श्येनैव द्रव्यसमु-द्देश उक्तो ये पूर्वयोः पूर्वस्य स्तोमाः तयोः पूर्वस्योद्ध-रति सप्तदशनवदशौ प्रजातिसंस्तावाविति षडति-शिष्टाद् द्विः स्तोत्रभाजः करोति सन्दंशरूपं दिदर्श-यिषन्नैडं ककुभि करोति पुरुषच्छन्दसः स्वरं विच्या-

वयिष्ठं चैतत् काशीतं वीणाक्षरिडं त्रय, परेषा मिच्छतीति सामानुष्टुभि करोत्येतानि क्रूराणि सामानीति स यत् त्रयाणां प्रथम मेतदानुष्टुभमिति पूर्वाध्याय पूर्वे यज्ञस्थाने ऽथाप्येतत् क्रूरणाधने वधार्थे ऽभिरूप मथापि बृहद्विधनेनानुग्रहकात्येष वै सामवर्ज्जं इति बृहद्रथन्तरयोर्वदति ऽतोऽमकाल्पा- योत्तरे विहितवन्तौ तृचा आहरति तत्र तदेव साम स्यादिति धानञ्जय्यः समानार्थौ हि भवतो द्वितीय मिति गौतमः स प्राप्यावेकाद्दो व्यावर्त्तयिषन्नथा- परतदभिनिकृष्टगीतिवधार्थे ऽभिरूपं वज्रोक्तं प्रमंहिष्ठीयं मुक्तो यत्र मौपगव मेडत्वात् षोडशिसाम्नो नामधं करोति तचैतदुद्दंहिष्ठीय मेतेनेडाकामस्य सिध्यत्यजामिकल्पश्चेति ॥ १२ ॥

महानाम्नीः षोडशिसामैता वज्रोक्ता राजयज्ञे ऽभिरूपा वज्रो हि राजेति कथं धर्मा इति कर्त्तव्या इत्येकेऽपि ह्यासा मेष स्वाध्याये धर्मो भवत्यथापि धर्मिस्थान मापन्नाः षोडशिधर्मान् कुर्वन् कथं महा- नाम्नीनां धर्मान् न कुर्यादित्यथापि वज्रोक्ता आपो ऽथापि संशयो लोमो लोपयन् न्याय्यतर इत्थ- कर्त्तव्या इत्यपरं पृष्ठापन्नानां वदति यदप उपनिधाय

स्तुवत इति तद्धैतदपि ह्यासा मेव स्वाध्याये धर्मी भवतीत्यपरम्. वाद: स्वाध्यायधर्मान् कुर्याद् यद्वैतद्धर्मिस्थान मापन्नां इति धर्मिस्थान मापन्नतरं खलु सद्रथन्तरं न धर्मांल्लभते यद्वैतदृच्योक्ता आपन्न इति आग्नेयुक्ता आपो ऽय: पश्चात्पता उपसृजन्ति वैश्वानर मेव. तं शमयन्त्यापो. हि शान्तिरिति ह्याह यद्वैतत्स्वरेऽशये लोपो लोपान् न्याय्यतर इति यो रथन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान् मन्येत सदृशन्यायाघातो ऽथापि तस्य वक्त्योक्ततरा धर्मा इति धर्मा इति ॥ १३ ॥

॥ इति निदानसूत्रे सप्तमः प्रपाठकः ॥

॥ अथ अष्टमः प्रपाठकः ॥

अथातो ऽहीनानामेषां सुत्या द्रव्याणा मन्वयो ऽथापि दशरात्रावल्योपांऽहीनांस्तत्र ऽसिद्धानि दाशरात्रिकाणि द्रव्याण्याहीनिकानि रात्रेः श्रौतकल्पस्थर्चो ऽपनयति सत्रस्याहीनस्य व्यावर्त्तयिष्यन्नेता: करोति पन्थं पन्थ मित्योतार इत्येता: सुतवतीनां स्थाने सुतवत्यं इति मध्यमस्य रात्रिपर्यायस्य होतु-

षामण्णी विन्नारयन्ति दैवोदासं वा स्यादौक्ष्णसद्मनं वेति विकल्पो वा स्यादपि वा दैवोदास महीने कुर्यात् पूर्वाध्याय पूर्वे यज्ञस्थान औक्ष्णसद्मनं स्वेषूत्तराध्याय मुत्तरे यज्ञस्थाने ऽग्नाप्यस्मिंत्सम्वादरूपो भवत्यौक्ष्ण-सद्मन मपि शर्वरीषु प्रोहन्तीत्यथ खल्वाह त्रिणिधनं भवतीति कथं त्रिणिधनᳪ स्यादित्येतान्येतान्येव निध-नानि व्यवस्यन्त उपेयु: सुवृक्तिभी२३४५ नृमादना-२३४५म् भरे२३४५ घुवा२३४५ इति तदाहुर्नेक्षन् त्रिणिधनं यदनन्तरांणि निधनानीत्यथ वा एतानि विहृतान्यनुपद मुपेयुस्तन्न निन्दा यदनुपायान्निध-नाना मभिवग्राहारो ऽथवा एतानि पृथक्स्तोत्रीया-सूपेयुस्तच निन्दा यदनुपायान्निधनाना मभिवग्राहारो ऽथवा एतानि पृथक्स्तोत्रियासूपेयुस्तन्न निन्दा यत् सप्रामक्र्त्ता निधनानां विप्रयोगो यथासमाम्नाय मेवो-पेयु स्यापि यथासमाम्नाय मेवैतत्त्रिणिधनं भव-तीति शाण्डिल्यायनो यत्तिरश्चो निधनमाचा भव-न्तीति सर्वेषु पदेष्वभ्यासात् सौमेधᳪ रात्रिषामेत्या-चक्षते कौत्स मश्वीनादपनयति सजग्धाश्वीन च व्यावर्त्तयिषᳪस्तथैतदाष्टादᳪष्ट्र मृष्विसᳪस्ताव मा त्वा विश्वन्त्विन्द्व इत्येतास्विता: सोमवतीनाᳪ स्थाने

सोमवत्य इति समुद्रप्रवादा आवत्यान्ते ऽभिरूपा इति ॥ १ ॥

बुभूषद्यज्ञ उत्तरो ऽपि वा षडहाग्नि सुपक्रान्तः स्यादेतेषां स्तोमानां मुपधानात् तत्रोभे सामनी बार्हतं तत्र बृहत्पृष्ठ्योपवतीति प्रतिपत्काव्य हेतो-रिति बुभूषद्यज्ञो ऽयं भवत्यनवधारितकाम इति लाभकायनस्तत्र सर्वाभिप्रायां प्रतिपद मचिकीर्षी-दथापि षडहो ऽयं संलक्षितः सैषा षडहप्रति-पद्भवत्यथापुरमि स्थाननती अचिकीर्षीत् तन्त्रेण बृह-त्प्रतिपदां रथन्तर मित्यथापोना मेवान्य वेदाः समा-सेवन्त्यास्थौगवादुत्तर माथर्वणां षडहो ऽयं संलक्षि-तस्तदेतत्मायश्चित्तिः स्या मा पशुकामयज्ञ उत्तरो ऽपि वा द्विरात्राग्नि मुपक्रान्तः स्यादेतेषां स्तोत्राणा मुपधानाद्दशरात्राग्नि वा छन्दोमानां मुपधाना-द्याख्यात सौभयसाम्य मनुपृष्ठ तत्र इयान्याज्यानि इयानि पृष्ठानि द्वैविध्यात् स वक्ष्यास्तोयामाभ्यां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भं करोत्येतानि नानात्वकृतानीत्यथापेत्र मातृतरा दशरात्रस्येति स काव्य हेतोर्गर्भान् करोतीत्येवं हि प्रशब्द बह्वृचा अधीयते गर्भवन्ति पृष्ठानि भवन्त्यास्तोयामस्य तानि

गर्भकारꣳ शꣳसेत्पशवो वै पृष्ठानि यद्‌ गर्भवन्ति भवन्ति प्रजननेनेव पशून्त्समर्द्धयन्तीति बृहद्वैराजगर्भं करोति बार्हतं वै वैराजं तेनैव तदनुरूपगर्भं वामदेव्यं महानाम्नीगर्भं करोत्यापो वै वामदेव्यमापो महानाम्न्यस्तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति पशवो वै श्यैतं पशवो वैरूपं तेनैव तदनुरूपगर्भं कालेयꣳ रेवतीगर्भं करोत्यैडं वै कालेयमैडा रेवत्य-स्तेनैव तदनुरूपगर्भं यथो द्रवदिडं कालेयं कस्तेडा-रेवत्यस्तस्मिन् मिथुनादेव प्रजायत इत्यपि वा सर्वाः-ण्याकर्त्तीनि वैश्वजिते रात्रिभिर्गर्भवन्ति कुर्यात् तच बृहत्यश्चरते तस्य वैरूपं विधृत्या इति तत्र गर्भविधानं मात्तुर्मध्यमं पर्यायꣳ सप्तोचीयं गर्भं कुर्वात् प्रथमोत्तमौ मुखाद्यैवं गर्भोपपत्तिर्भवतीति कथं धर्मा इति कर्त्तव्या इत्येके गर्भभूतानि भवन्त्यनुभूतान्यधर्मा गर्भो भवतीति कथं धर्मा इति कर्त्तव्या इतरके गर्भभूतानि भवन्त्यनुभूतान्यधर्मा गर्भो भवतीति कर्त्तव्या इत्याचार्यास्तत्र तान्येव विवचनामि यानि विश्वजिति सुरूपं ज्ञराबोधीयस्य स्थान एतत्पशुसꣳस्ताव मित्युक्तस्याथर्वणां द्विपदा यत्र करिष्यन् भवति तचैतस्मीहविष मध्यस्तगीत्यतिरिक्त मतिरिक्ते कल्प ॥२॥

प्रजातिकाम-*-यज्ञ उत्तरस्तत्र यो द्रव्यविकारः प्रजातिकाम-†-यज्ञस्त्वात् स भवति व्याख्याता उत्तरे ‡ अथैते एकाहस्तोमा एतान् कामानभ्युपकृता यथैतद् ब्राह्मण मथापरेकाहस्तोमानाहीनिकान्यहानि सोऽन्वस्थाय मदिदर्शयिषीमत् खलु बृहद्रथन्तरपृष्ठान् सुर्मी रथन्तरवाहन्ता च्छ्रते स्तोमा इति ज्योतिष्टोम तत्र ज्योतिषा च्छ्रते स्तोमा इति, तत्रानुपृष्ठं द्रव्या-गमः षोडश्याः षोडशिनो ऽनुब्राह्मणं वेति विचार-यन्ति किं स्तोमा अनुब्राह्मणं त्रिवृत्कविंश-स्तोमा इत्येष एवां प्रकृतिस्तोमो भवत्यथाप्याहुरह-स्तोम मह: प्रथमोत्तमयो रन्वियाता मेकविंशं तु पञ्चदशस्य कुर्यात् पञ्चदशं सप्तदशस्यैवं तं स्तोमं संस्तुतो ऽतिरात्रः सम्पद्यते यो यज्ञस्थाको भवत्यह-स्तोमः स्वेवाक्विषु रित्यनुब्राह्मण मित्यनुवाक मित्ये-तत् आद्यो वा ह्रस्वः स्तोमः स षोडशिनो न्यायेन यो वा कसीयाद्वितीयाहस्तोम चैन मनुयत्तम्पश्यामो ऽथातो द्विराकाश्च ज्योतिष्टोमसर्वस्तोमौ समश्यति मा विलोपे भूयान् विलोपेऽभूदिति च द्वादशरात्रि-

*, † "प्रजापतिकाम"-इति ख।

‡ ख-पुस्तके अत्रैव द्वितीयखण्डः समाप्तः।

कार्या. न ह्ये करोत्यथैतानि दशरात्रस्यान्ताहानि चतुर्थ-षष्ठे नवम-दशमे इत्येतेषां द्व्याण्यहीनान्तेषु चिकीर्षितानि तत्रोत्तरच बार्हस्पत्यमान मन्यत प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते ह्याविष्मत-हाविष्कृते हाविष्कृतं पूर्वस्याह्न आभवचरं स्थानापन्नं भवति द्वितीयस्थाने च हाविष्मत मुत्तरस्य माध्यन्दिने सङ्हितस्य भागविक्षेपे भागसन्तानाय निकामयते ऽपि चैवं सतौ नेदीयसी हाविष्मत-हाविष्कृते भवत इति जनुषैकर्चौ बहर्गस्यान्यायेन चैशोक-वैखानसे जागतस्य भागस्यानुग्रहायाहीनान्तेष्वकामिश्चिकीर्षितां: संरोधान्विष्टे दीर्घतमसोऽर्को विपर्ययेणेतरयोरापि: स यदेतास्वेवासु स्वयोनि. रथाप्येता धुतवत्यो दृचितवत्यो ऽन्तेऽभिक्रूपा. इति ज्योतिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितान्येवं पथ्यावस्तान मित्यायुष मुत्तरस्य द्वितीयं करोत्यथैते :सप्रायास्त्रिककुद्दुका. इति बृहत्पृष्ठं बार्हतं तन्त्वं द्वितीयं हि स्थान मापन्नां इत्युत्तरत्यन्तलक्षणानि त्रिणव-त्रयस्त्रिंशयो रन्वपाय मुत्सेधनिषिधौ परिखाना मिति जरबोधीय महीनेषु चिकीर्षितं मेतच्छन्दोमसामेति तस्य दुष्णाहि

राथन्तरान्स्तोमान्कुर्य्य मविच्यावयिषीद्दृइ्ंशीयं ते- रश्चा:वेति विचारयन्ति पूर्वस्याह्न उकथान्त इत्यह्नोद्दं- शीय मुपक्रमयीर्थ मह्वरिति तैरश्चा मषोडशिका यात्रिस्तोमस्त्वाचेणाषोडशिका ह्योवंयुर्भवतीति त्रिवृत् पञ्चदशौ ऽग्निष्टोम उत्तरस्य पूर्व एकस्तोमता मिवा- ह्नोर्दिदर्शयिषन्नायुषा प्रच्युतं पञ्चदशं पूर्वस्मिन्नहन्य- नुमृह्णाति तत्र यदेतत् सक्तो ऽभवदिति कपिवनो भायजात्यश्चातूरात्राय जामदग्नये दिदीचे ब्रह्मचा- रिणं सम्पन्नकुलीन मपः प्रहृत्य तस्य त्रिवृत् पञ्च- दश मह रुपेतं बभूवाथेतरस्त मर्थं साधयित्वा प्रत्याजगाम समाय मिम मह्रर्यागं निर्णीयमतेत्यायुर- तिरात्र मुपदधौ ब्रह्मचारिणश्च परिहारेण यत्र प्रत्यव- हारेण च हतो बभूव यस्त्वेतौ दोषौ परिहरेन्न हत: स्यादिति पूर्वणैव द्रव्यकल्पौ व्याख्यातौ व्याख्या- त: ॥ ४ ॥

अथातस्त्रिरात्राणां वामदेव्यं तृतीये पृष्ठे करोति लोकविधां त्रिरात्र उपक्लृत एतानि लोके सामानीति तानि कुशल यथाभक्ति निदधाति तन्त्रेषु विप्रतिपद्यन्त आहीनिकतन्त्राणीति गौतम- स्तान्नायन्त्रीभिर्विज्ञानीम एकैवान्त्राहीनिकी भव-

त्यर्च प्रवेति तां यत्करोति सहस्रवतो सहस्रवत् तद्-भिरूपेत्येकाहिकानीति धानञ्जय्यस्तद् गायत्रीभि-रेव जामीम एकैवात्राहीनिकी भवति. प्र सोमासो विपश्चित इति तां अरक्करोति प्रवत्युपक्रमे ऽभिरूपे-त्यहरहरेवाहीनैकाहाभ्यां वर्त्तत इति शाण्डिल्या-यन एवं युक्ता एता गायत्र्यो भवन्तीत्यथ खल्वत भाग-विपर्ययो भवति लोकविधां त्रिरात्र उपक्रतस्तं यथा-भक्त्यचिकीर्षीच्चे एते परे अहनी भागविपर्ययाद् द्रव्यसमासेन वर्त्तते द्वितीये ऽहस्यानि द्वैतीय-कानि भागान्वितानि तान्तार्तीयिकान्येतदेव विप-रीतं तृतीये खल्वत इयान्यत्तरूपाणि क्रियन्ते प्रजा-पतेस्तु वागत्तराक्षराणि चाज्यादिषु प्रजापतेर्वाग-त्तराणि यथोपलम्भ महस्वक्षराचराण्येकात्तराणि-धनं यौधाजय मेष आचार्यसमयो ऽथाप्याह यदा-त्तराणि प्रथम मह्भजन्त इतिं व्याख्याता अर्का-न्तथाज्यदोहानि पूर्वाविकौ व्यत्यस्य चात्तराणिधनं प्रथमे ऽहनि चिकीर्षन्नाज्यदोहानां प्रथमं तृतीय एव मित्र ब्राह्मणं भवत्यथाप्येषा मेतत् त्रिणिधनं तृतीये ऽभिरूप, मनु प्रथमस्य. करोत्यत्रैव सन्तानार्थं मिद भवति. इात्तरणिधनत्वादनुच्छन्दस मितरयो रैड

मन्त्यं करोतीडानुग्रहो . जगतीं वा खेन सामान्ते-नापिप्रादयिषीत् ॥ ५ ॥

उपवती द्वितीयस्य प्रतिपन्नवमाह्नागान्विमां कया ते अग्ने अङ्गिरस, इति होतुराज्यं करोति तृतीय मिति हि भवतीत्यर्थाप्नाह यत्सामा स्तोमो भवति तदा-ज्येषु निराहेति ता एताः कावत्यो यथा वामदेव्यचौ द्वाभ्यरात्रिकाण्युत्तराणि सन्तनीति, स्वयोनीति होतृ-कापृष्ठान्येतानि, छन्दोमचाहे प्रायश्चित्तार्थं गायत्र-पाभ्वं मैत्रावरुणसामैतद् वामदेव्यसदृशं तत् खलु बृहतीषु करोति त्रिंस्तानां बृहतीं पृष्ठेषु चिकीर्षन्न-भ्यर्चिन . नवाक्षराक्षरं भवति ककारषकारादि. रकारः सन्तनि ब्रह्मसामा स्ताविं मन्म पूर्व्यं मित्येता ब्रह्मप्रवादा इति सन्तन्यच्छावाकसाम. नवमाह्नागा-न्वित मथ खल्वच जामि भवति लोकविधां त्रिराच उपाकृतः सम्भिन्नं माभ्यां लोकाभ्यां मन्तरिक्ष मिति पाञ्चमिकों ककुभं करोत्येतस्या मक्षरं भवति ककार-षकारादि रकारः पिपीलिकमध्यां करोति वायुर्नो ऽयं चिरांचसतोभरं वाकारां ऽनुष्टुभा मचिकीर्षीन्नव-मिकी ह्युत्तरा अक्षरसमासो हि तान्त्रीयिकीषु तासां मध्यमा मुद्धरति द्वयराज्ञलिङ्गेति तचैतां करोति तथ

सखायः पुरूरुचं मित्येषा सखिमती यथा वामदेवास्य-
चस्ता यदावर्त्तयति परिवत्या प्रक्रमं परिजिहीर्षन्
नाना ऽग्निष्टोमसामानि नानात्वार्थी नानाच्छन्दस्सा-
वृत्तेष्वेवं भूयो नानात्व मिति. स यदिहानुष्टुभः
करोति वृहतीः कृत्वानुष्टुभो चो भवति * तचैतद्विशो-
विशीयं स्तयोभ्यापन्नं पुरस्तादेतत्स्थानं वाक्प्रवादो
ऽत्र भवति भागाऽग्विताम्नुक्थानि होता देवो अमर्त्यं
इति. तृतीयस्य होतुराज्यं हो इति. तृतीय मिति
हि भवतीति गीषूक्तं प्रायश्चित्तिसामैतस्मिन्नक्षरा-
न्तरं भवति रेफादि रकारः सतोवृहतीं करोति
त्रिपदा त्रिराचे ऽभिरूपेति सत्रासाहीयं मैत्रावरुण-
सामैतद् वामदेव्यसदृश मपुरस्तात् स्तोभं बहिः-
स्वारं यथा वामदेव्यं वारवन्तीय मग्निष्टोमसामै-
तद्गायत्रीसामापन्नं पुरस्ता देतत्स्थानं वाक्प्रवादो
ऽत्र भवति वागुक्तोऽयं त्रिराचो ऽपि वानुष्टुभोपपत्त्या
वाक्प्रवादेनानुग्रहो भविष्यतीत्यक्षरविक्रमे ऽयं त्रिरा-
चोऽपि वानुष्टुभोपपत्त्या अक्षरप्रवादेनानुग्रहो भवि-
ष्यतीति विद्वानविद्वानिति तु भवन्ति नाना साधु यं
त्रिराचक्षत्र नानर्त्त्विजो ऽचिकीर्षीत् कथ मविद्वा-

* "कृत्वानुष्टुभो वेति"—इति ख।

न्नृत्विक् स्यादिति त्वेवैतत्त्र सदस्यानेव प्रतिग्राहकान्
कुरुत इति ॥ ६ ॥

राजयज्ञ उत्तरस्तस्य यद्येवंविधोऽहर्योग एतान्य-
स्ताहान्यन्तो हि राजेति महानाम्नीर्मध्यमस्याह्नः पृष्ठं
करोति सर्वच्छन्दस्त्वासु सर्वपशूना मालम्भो न भवि-
ष्यतीत्यथापरातां वज्रीत्ता राजयज्ञेऽभिरूपा वज्री हि
राजेति कथं धर्मा इति कर्त्तव्या इत्येते तत्र ते चैव
कारणवर्णा ये वज्रेऽपि चेह स्वस्थानतरा: पृष्ठ्यं हि
भवन्त्यहीनं चाथापि बर्हिर्द मिहाशान्तं क्रियते
सर्वपशूनां मालम्भो व्यभि मेथिका: पृष्ठविलोपस्त-
त्रापि: शान्त्यर्थास्ते क्रियमाणा बृहद्रथन्तरयोर्द्धर्मान्
कारयेयुरित्यथाभि संयुक्तधर्मा इत्यथ बृहद्रथन्तर-
योर्द्धर्मान्न कुर्युर्महानाम्नीबलान्नु नूनं महानाम्नीनां
धर्मा: क्रियेरन्नित्यकर्त्तव्या इत्यपरं तत्र ते चैवा-
कारणवर्णा ये वज्रेऽपि च यः स्वाध्यायधर्मान् प्रतीयात्
कृत्स्नान् प्रत्येतु सर्हतीति ते वेलायांन्नोऽर्थस्तन्माध्य-
न्दिनीन् महानाम्नीभिः स्तुवीरन्नेको वा द्वौ वा
सम्प्रगायेतां नेतरे शृणुयुरित्येतान्येव मकुर्वन्तो
निर्वचनस्वाध्यायधर्मो ऽथापि यो बृहद्रथन्तरयोर्महा-
नाम्नीकारितान् धर्मान् मन्येत भूयस्त्वाल्पीयसि ऽनु-

सꣳहरेत् प्रत्यक्षे च परोक्षायामनुचर्यं गमयेदित्यत-स्तत्पापीयो यो बृहद्रथन्तरधर्माननुकृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान् मन्येत समानोपादानाꣳ समान-विधानानाꣳ सतो य एकान् कुर्यादेकान् न किंꣳ सोऽत ऊर्द्ध्वमन्याहन्यादं व्याख्याता अनुष्टुभः प्रति-पदस्त्वनुष्टुभैताभिः प्रच्युता मुपवतीं द्वितीये ऽहनि प्रति-पदं करोति कविमन्तं प्रथमात् प्रच्युतं तृतीये ऽह-न्यनुगृह्णाति वामदेव्यं महानाम्नीभिः प्रच्युतꣳ स्वे स्थाने ऽनुगृह्णाति पार्थुरश्मं ब्रह्मसाम पङ्क्ति प्रति-प्रयोजना महानाम्न्य एतत् पाङ्क्तं त्वचंसामाथकार-णिधनं ताभ्यां प्रच्युते सन्तनिनी माध्यन्दिने ऽनु-गृह्णात्याभीक्ष्ण्यामानीमा प्रत्येषाता मिति ॥ ७ ॥

अथैतस्य पतन्तकस्य प्रथमे ऽहनि वैष्णवीष्व-नुष्टुप्सु पावमानीषु बहिष्पवमानं कल्पये दित्येक आहुरेतत्प्रकृतौ दृष्टं भवतीति नैतदस्तुनुः स्तोमेषूप-पद्यत इत्यपरमेतस्मिन्नेव बहिष्पवमाने गायत्रीः पावमानीं रावपेदेतदिह ह्याविष्कृतं भवतीति चतु-ष्टोमकारितास्ता भवन्तीत्यपरं गायत्रीष्वेव कल्पये-दित्यथ खल्वाहैते एव पूर्वे अहनी इति तत्रैके पातन्तके प्रतियन्त्येतं विधाय प्रदेशो भवतीति प्रकृत्यपश्रया

विकारा भवन्तीत्यपर प्राकृतस्यैवाश्वमेधस्य प्रतीया-
दित्यथापि ते नानास्तोमा एकस्तोमो यत् भवति
तत्र स्वतन्त्रा एकाहाः स्युरित्येके बहुधैकाहानाꣳ
स्वातन्त्र्यं दृश्यते यथायुष्कामे षडहे नवरात्रयो
रिति त्रिरात्रतन्त्रा इत्यपर मेवं च तन्त्राविलोपो
ऽपि चैषो ऽहीनन्याय इत्यषोडशके गोगायुषी इत्यपर
मेवं दृष्टे त्रापि चैवं प्रदेशो भवतीत्यथैष वैदत्रिरात्र-
स्तस्य त्रिवृत्स्तोमाः स्युः षोडशिन उत्तमस्यातिरात्रस्य
षोडशं प्रथमꣳ रात्रिपर्यायं तावत् स्तोमो यथा-
त्रिरात्रो नाना षोडशिसामानि नानात्वार्थो नानदं
प्रथम उद्वꣳशीयं द्वितीय एतदानुष्टुभꣳ हरिवर्णोनि
यथा गौरीवितं तस्य स्थाने तैरश्च्य मेतत् पूर्वाभ्याꣳ
समायं न्याय्य उत्तमे षोडश्यथैत उत्तर एतां कामा-
नभ्युपक्रता यथैतद् ब्राह्मणꣳ स्तोमकारित आवापो
ऽन्ववसरवमत्यवरूढान्युत्तमस्याह्न उक्थानि लोक-
विधा त्रिरात्र उपक्रतो रोहोपकारो ऽथाप्येव मवरा-
हतꣳ सवन मिति न्यायक्लृप्त उत्तरो न्यायक्लृप्त
उत्तरः ॥ ८ ॥

अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव न हि षाड-
हिकान्यनुभवन्ति नान्यो वरलुलुपसीत ते यन्नामा-

छन्दस्सु ब्राह्मणेनैव तद्व्याख्यातं कानि तन्त्राणीति चतुरहतन्त्राणीति गौतमस्तद्विजानीमस्त्वतुर्थेऽहनि चतुर्थप्रतिपद मादिशेकाहतन्त्वाद्वाचि मुपजिगामिषन्नथ प्रतां करोतीति चौण्यांह्लीनिकान्येक मेकैकाह्निक मिति धानञ्जय्य एवं पर्वणाह्नीनत्वादान मेकाहतन्त्वाद्वाचे, क्वायः स यदेतद्देतदन्त्वान्तर२ स्तोमकारित आवाप उद्धरति जनुषेकवौ स्तोमकलाथैस्तत्र ज्योतिष्टोम्यौ करोति तयोः स्थाने द्वावमिक्वौ नानात्वार्थौ ऽथ यत्र षड्ढो भवति साप्तमिकीं तृच्न ककुभं करोत्यसञ्चाराय तत्र खलु पदस्तोभान् करोति चतुरोऽयं वीरानुपक्रतस्त एते चत्वारः समानग्रानयः समानार्षेयाः पुन्नामधेया गणन्नामधेया गणेडा गणनिधना अपि वा चातुर्विध्याद्देव क्रियेर२स्ता२स्तु यद्देवं प्रयुङ्क एव मिडान्तो रोहोऽपि चैवं दाशरात्रिको ऽवसानो भवतीति तान् खल्वन्यान् करोत्यचैषा२ स्वं छन्द इति तान् कुशल यज्ञिन्यासु धर्त्ता दिव इत्युत्तम एतासु स्वयोनि रथाणेता अन्तलक्षणैः सम्पन्ना इति व्याख्याता अर्कास्तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे गौष्क्तं प्रायश्चित्तिसाम पदस्तोभबाध मर्कं द्विपुदास्वनुगृह्णाति तेन प्रच्यते पारत्लीय मुष्णिाह्वन्तसाम

माप्रच्योष्टेति विपरिहरत्यानुष्टुभे अजाम्यथ एतेनैवो-त्तरे व्याख्याता उद्धरति पदस्तोभान्न ह्येते चतुरो वीरानुपक्रतास्तच्च कुशलं यन्नित्यादिपदस्तोभमपाया-द्रक्ः स्वं स्थानं समापद्यते तस्यानुसमापत्तिं स्युध्यवांरवन्तीये समापद्येते अतो यो द्रव्यविकारः स्तोभकारितः स भवति ॥ ९ ॥

अथ खल्वाह वसिष्ठस्य जनित्रे भवत इति कस्येदं ब्राह्मणं स्यादिति बृहद्रथन्तरयो रविप्रयोगस्येत्याहु रेते विश्वोवसीयसो आजनित्रे भवत इत्यपि वा रथन्तरस्यैव द्वियोगस्यैतद्धि वासिष्ठ मित्यपि वा रथं-न्तरस्य ह्यतस्य वासिष्ठस्यैते वासिष्ठे भवत इति जनित्रे एवानुकल्पयेदिति कौत्सो जनित्रे भवत इति सति किं मन्यैःदनुकल्पनान्न त्वेवानुकल्पयेन्न ह्येते आनवकाश्यान्ननुकल्पयतीत्येतेषां त्वेव विचा-राणा मेकस्यैतद् ब्राह्मणं स्यादेकस्तोमता मिवाक्ता द्दिदर्शयिषन्नुत्तमे भागस्तोमान् करोत्येते प्राप्त-स्यांना इति पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातस्ते खलु स्वासु करोति न ह्ययं चतुरो वीरानुक्तो ऽथापि नानाभागश्चतूरात्रो ऽथेह समान-भागे चतुर्थपञ्चमे इति कानि तन्त्राणीति पञ्चाह-

तन्त्राणीति गौतमस्तच्चतूरात्रेणैवं व्याख्यातं चत्वार्यहीनिकान्येक मैकाहिक मिति धानञ्जय्यस्तत्तेनैव व्याख्यात मग्निष्टोमः प्रथम मह रुक्थानि मध्ये दशरात्रन्यायेन यत्र सᳪंस्थाभिप्रयुज्यत एषा ऽभिप्रयुज्यंत उद्धरति षोडशिनं चतुर्थादिराजा मन्वंपायᳪं स्वराजोपेयुः स्तोमस्य वा लोभाद्यथाग्रेम मतिरात्रे करिष्यन् भवति तन्न समवैविचारयिष्णोदुद्धरत्यातीषादीय धर्मिणि तत्परा षडहे धर्मिः भवति तत्र याथात्म्यात् क्रोशं प्रत्याहरत्यपि वा अध्येनं प्रच्युत मिहानुग्रहणाति तद् भवत्यूर्द्ध बाहते ऽहनीति स्तोमकारितं आवाप एतेनैवोत्तरो व्याख्यातः स्तोमकारित उद्धारः सप्तदशं षोडशिनं करोति यो वाघ्नः स्तोमः स षोडशिनो न्यायेन यो वाङ्क्ति भक्तिरेवं मुत्पन्नो हि भवत्यथाप्यनादिष्टव्यूहेन भवत्यथा कथं महीनाम्नो रात्रेरितीति क्रसीयानित्यहःस्तोमं स्वे त मनु यन्तं पश्यामी ऽथाप्याह सप्तदशᳪं स्तोमानातिमन्ती व्रतामि मुत्तर मुपक्रतः स खल्वेकाहा क्रमाप्ता व्याख्याताः ॥ १० ॥

ऋतुषडहे कथᳪं रात्रिरित्यक्रात्तवेरति शौचिवृचिरेव मुत्पन्ना हि भवत्यथाप्यनादिष्टां व्यूहेन भव-

त्यथापि कथ महीनाऽङ्गो रात्रेरपायो ऽभविष्यदित्य-
थापि कृत्स्नतायै वै नून मिह रात्रिः क्रियेत कृत्स्नो-
ऽयं षडह इत्यथापि ऽत्र एष चतुर्थो भागो रात्रेः कृत्स्ने तत्
कृत्स्नो ऽयं षडह इत्यथापि ऽत्र एष चतुर्थो भागो रात्रेः मव्य-
र्दितां मत्यक्रमिष्यदिति कर्तवे ऽति गौतम आदिष्टा
कल्पेन भवत्यथापि ऽत्र एषाहीनसंस्था यद्रात्रिस्ता मव-
सानभूतां षष्ठ महरागच्छतीत्यथापि ऽत्र एषो ऽहीनन्यायः
सर्वे ते रात्रिमन्तो ऽथाप्यरात्रिकं व्रतं तस्यान्ते निपा-
ताद्रात्रि मुपधीयमानां पश्यामो यथा सप्तरात्रेष्व-
थापि यः पृष्ठावलम्बनस्य पञ्चमादनादेशाद्रात्रि
मुपनयेदथापायाद्रात्यपायाच्च स्तोमप्रत्यवरोहो ऽपि
सोऽर्थागमाद्रात्रिं प्रत्येतु महतीति यद्वेतदेव मुत्पन्न
इत्यनन्तं वै तत्र भवत्यन्तदर्शना रात्रिरिति यद्वेतद-
नादिष्टव्यूहेनेति नित्यत्वान्न नून मेनानादिशतीति
यद्वेतत् कथ महीनाङ्ग इति कथं वा अपरातिरात्रिको
ऽभविष्यदिति पश्यामस्त्वाहीनिकेभ्यस्त्र्यहेभ्यो रात्रे-
रपायं यथा त्रिरात्रेषु यद्वेतत् कृत्स्नो ऽयं षडह
इति कृत्स्नो ह्येव षडहो रात्र्या तु कृत्स्नतरो भवि-
ष्यतीति यद्वेतदत्यक्रमिष्यदित्ययमह एवाभिक्रान्तो
भवत्यतिक्रामन्तं च पश्यामो यथाप्तोर्यामे गौरीविता

पायान् पृथक् स्वाराणि स्तोत्राणि करोति नाना साधुरहीन इति स यदेतान्येतानि रूपसम्पन्नानीति ॥ ११ ॥

आयुष्कामयज्ञ उत्तरस्तत्र त्र्यहो समस्य निदधात्यहीनत्र्यहं चैकाहत्र्यहञ्च कस्य हेतो रिति त्रयः प्राणापानव्याना इत्यग्निष्टोमसंस्थं ज्योतिष्मेषास्य प्राकृती संस्था ऽऽप्येतया संस्थया अन्यथा ऽपि नानात्वयाविमौ त्र्यहौ तानुपक्रमसंस्थया प्राचिक्रमिषोदषोडशिका रात्रिः स्तोमस्त्वावेणा-षोडशिको ह्येवायुर्भवतीति द्वितीयस्याह्नो वासिष्ठं माध्यन्दिनात्यं स्यादिति शाण्डिल्यः षष्ठार्थनेद्पुरा प्रच्यवते नेह षष्ठार्थ इति पार्श्व मेवेति गौतम एतत् समूहसाम समूढावच्छेदोऽयं भवतीति तृतीयस्यानुष्टुभि बृहत् करोति त्र्यहे समं बृहद्रथन्तरे युयुत्समाणौ जाम्यर्थं चैव स्यात् पृष्ठ्यावलम्ब उत्तरस्तस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवत्युत्तराति षोडशिन चतुर्थात् तत् पञ्चरात्रेणैव व्याख्यातं त्रयस्त्रिंशानि पञ्चमस्याह्न उक्थानि रात्रिकारितो हि स्तोमप्रत्यवरोहस्तान् विश्वजिति करिष्यन् भवति भवति ॥ १२ ॥

अथातः सप्तरात्रास्तत्र पृष्ठ्यं वृतं सप्तमं कर्म्मस्थे-तद्ध्यतं पृष्ठं भवत्यथाप्यनङ्ग मेतद् वृतस्य यदुक्थानि तन् ज्योतिष्टोमानि स्वस्तोमान्याहरति षोड़शि-मती रात्रि रहीनन्यायेनाथाप्यनङ्ग मेतद् वृतस्य यद्द्वाविंस्तत्र यैव कृत्स्नतमा रात्रिस्तमा हरतीति सप्तदश मुत्तरस्य वृतं स्तोमकारित उद्धार स्तस्य स्तोमान्ययीभुक्थानीति किं स्तोमानि स्युरित्येक-विंशस्तोमानीति गौतम एष एषां प्रकृतिस्तोमो (न) भवति न मन्वियुरित्येतत् स्यात् सप्तदशस्तोमानीति धानञ्जय्य एषोऽस्य वृतस्य स्तोमो भवति न मन्वियु-रित्येतत्स्यात् पञ्चविंशस्तोमानीति शौचिवृक्षिरेष वृतस्य प्रकृतिस्तोमो भवति न मन्वियु रित्येतत्स्या-दथाप्येवं तासां स्तोत्रीयाणा मनुग्रहो भवति याः पञ्चविंशाद् वृतात् सप्तदशे क्रियमाणेऽपयन्ति द्विपञ्चस्तोत्रीयेनानुगृह्यते ते चेदनुजिघृक्षेत् त्रिणवं प्रथम मुक्थं कुर्यादेकविंशं षोडशिनं करोत्येषो ऽस्य प्रकृतिस्तोमो भवत्यथाप्येवं तासां स्तोत्रीयाणा मनुग्रहो भवति यथैतच्छौचिवृक्षिरिति छन्दोसपव-मान मुत्तरस्य वृतं स्तोमकारित आवापोऽथ खल्वत्र विधर्माकरिष्यं स्तोमच्छाचेयं धष्याख्यं करोतीति

इन्द्रयोः सत्रमोर्याथान्तर्यात् पूर्वं मीदन्ते ऽथापरतस्या-
विकृतं निधनं भवत्यविकारः पूर्वो ऽविकारादित्येक-
विंशान्युक्थान्येकविंशस्तोमं षोडशिनं करोति
तद् व्याख्यातं प्रथमे सप्तरात्रे ऽभ्यास उक्त उत्तरस्य
पञ्चाहो बृहद्रथन्तरपृष्ठश्चतुर्थस्याह्न एकविंशः षोडशी
पञ्चमस्याह्नः पार्थस्य लोक आकूपारं वाचेयं वेति
विचारयन्ति नानापुरुषकल्पौ ख्याता मिति ह स्माह
धानञ्जय्यो ऽन्य एवाकूपार भरोचयिष्यतान्य आचेय
माचेयं चैवाभिरूपतरं पञ्चमे ऽहनि स्थानसम्मितं
पञ्चमस्याना अन्नय इति चतुर्थस्याह्नः शुद्धाशुद्धीयस्य
लोक आकूपारं पञ्चमस्याह्नः पार्थस्याचेयं पार्थं चैव
नित्य महः पार्थं व्याख्यात माचेयं नु खलु कुर्वत
उभयोरनुग्रहो भवति वृते हि पार्थं करिष्यन् भवति
चतुर्विंशं बहिष्पवमानं सप्तदशस्तोमं वृतं करोति
तत्र त एवोक्थानां स्तोमं विचारयेत् सप्तदशे
वृते ॥ १३ ॥

॥ इति निदानसूत्रे अष्टमः प्रपाठकः ॥

## ॥ अथ नवमः प्रपाठकः ॥

प्रतिष्ठाकामयज्ञ उत्तरः स खल्वेकाहस्ते व्याख्याता जनकसप्तरात्रे चत्वार्याहीनिकान्यहान्याहीनिकतन्त्रायणन्तत्वा दृहरति षोडशिनं चतुर्थात्तद् व्याख्यातं व्याख्याता त्र्यकास्तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे धर्त्ता दिव इत्युक्तम एतास्  स्वयोनि- द्वितीयस्याह्नः सौभर मुक्थानां ब्रह्मसाम कुर्यादिति धानञ्जय्यस्यैककुभं हि चतुर्थे करिष्यन् भवत्यौपगव मेवेति गौतमो ऽतिरात्रे सौभरं करिष्यन् भवत्येव मुभयो रनुग्रह इति षोडशिमती रात्रि रहीनन्यायेनाविव चतुष्टोमः षोडशिमानिति गौरिविृत्तिः शम्बूपुत्रो नात्र च नेति राणायनीपुत्रः पृष्ठाः स्तोम उत्तरस्य षडहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवति चतुर्थस्याह्नः प्रत्यस्मै पिपीषत इति गौरीवितं षोडशिसाम विराजा मन्त्वपायं स्वराजोपेयुः पृष्ठापायाद्रेत्यौपयन्ति तवैतद्धाढंच्युल मेतज्ज्ञायत्रीसामेहकारवत् षणिधनं यथा रैवत्यो विपरिहरे दौच्चारेणेत्र इति गौतम एव मिडारम्भयोरुहतीति न विपरिहरे दिति धानञ्जय्यो ऽपि च्छेद मजामि स किमर्थो निरयं कल्पं

व्याकर्येदित्यष्टरात्रस्याषोडशिका रात्रिस्त्रातुष्टोमन्या-येनाथापि कृतः षडहे षोडशीतग्रायुष्कामयज्ञ उत्तरः स यन्नवरात्रो नव प्राणा इति त्रिकद्रुकानुपदधाति छन्दोमसाहस्याद्दर्शप्येत ऊनस्य 'पूरयितारो षोड-शिका रात्रिः स्तोमस्याचेणाषोडशिको ह्येवायुर्भव-तीति पशुकामयज्ञ उत्तरस्तत्र पञ्चाहं करोति पाङ्क्ताः पशव इति यदु विश्वजितं पशूनानि पृष्ठा-नीति त्रिकद्रुकानुपदधाति छन्दोमसांदृश्यादर्शाप्येत ऊनस्य पूरयितारस्तान् पुरस्तात् पञ्चाहस्य करोति विश्वजितं हि रात्र्युपायाय कोऽस्मिन् 'भक्त्यायुषो-ऽनुष्टुभि बृहत्करोति च्यहे समं बृहद्रथन्तरे युयुक्ष-माणो ऽजाम्यर्थं वैव स्याद्वाकं जन्म वेति विचारय-त्यथापि नैताः स्वतन्त्राः स्तोमविधां बृहदा-पद्यते तत्राकूपारं तचसमाप्तये तदेतन्नवमाहा-गान्वितम् ॥ १ ॥

अथैष दशरात्रो बृहद्रथन्तरपृष्ठ एव तत्र खलु विश्वजितं दशमं करोति स खलु विश्वजित् क्रिय-माणो दशमस्तन्त्रं प्रत्यूहति तत् प्रत्यूह्यमानं पूर्वे तन्त्रे प्रत्यूहत्यत्र यदेवैकं पुरा सप्तमे कृतं तन्त्रं भवति तत्प्रच्यवते ऽथैते षष्ठ-नवमयोस्तन्त्रे व्यत्यस्यति षोड-

शाह्विकैरयꣳ स्तोमैरभि विधीयते स त्रयस्त्रिꣳश स्तत्र मचिकीर्षीत् तस्येतरस्थानं परीतं भवत्यत्र खल्वयं सर्वो दशरात्रो नानातन्त्रो भवति समूहति बार्हद्रथन्तरपृष्ठ्यान्नित्याभिरनित्याभि ह मात्राया मकरिष्यदनित्यो ह्ययं दशरात्र इति नित्यासु चतुर्थपञ्चमयोर्जगत्यौ शास्वतुर्थे नित्याः सप्तमे ऽहनि ताः करिष्यन् भवत्यतो नित्याः करोति तद्दशेन पञ्चमे कुशलं यदनित्यास्त्रिष्टुभो नित्यानित्या एवाचिकीर्षी दित्यपर नित्ये ह तन्त्रे अनित्यौ स्तोमौ यत्र नित्यानित्या अभिरूपा यद्' पृष्ठ उभयोरनित्या उभयꣳ ह्येव तत्रानित्यꣳ स्तोमस्यैव तन्त्रञ्च नित्यास्तु परयोरह्नोर्नित्याभिर्ह्येतस्य द्व्यहस्य समूहो नित्योऽस्तु नवमे ऽन्तर्विधा हि दाशमिक्यो विश्वजित्यन्तर्विधाः करिष्यन् भवति तत्र कुशलं यज्ज्योतिष्टोम्यौ करोति तन्त्रान्विते च पृष्ठान्विते चाथ खलु दीर्घतमसोऽर्कं सप्तमे ऽहनि करिष्यन् भवत्यन्तसामान्त इति तत्त्वस्यः श्वशिरामिकः सप्तमे त्रय एवैको ऽग्नेरर्कस्तन्त्रापेतस्तन्नवम महर्हरति ॥ ९ ॥

अथ द्रव्यसमुद्देशो यानि यथास्थानं व्याख्यातानि तानि यान्ययथास्थानं तैरेवाष्टभिः पर्याये-

त्वेषम मन्वयं समन्वीक्षेत नाना ब्रह्मसामानि नाना-
त्वार्थः श्यैतनौधसवर्णानि बार्हद्रथन्तरपृष्ठान् नाना-
ऽग्निष्टोमसामानि नानात्वार्थं ऐडानि भूयिष्ठानि
करोति सामान्तर्थं स्थानं तत्सामान्तं मथाप्येष तृतीय-
सवनसामान्तस्त मदिदर्शयिषोर्नानाच्छन्दसेव भूयो
नानात्व मिति तानीमानि भवन्ति संप्रच्छन्दांसि
नवाहं नानु भवन्ति तत्र ककुभं च विराजश्चोप-
प्रयुङ्क्ते सा प्राप्यांस्तानि कुशलं यद्रोहिणः प्रयुङ्क्ते ऽग्न
आयूंषि पवस इति प्रथमे ऽहनि करोति कस्य हेतो-
रिति शिशुः संयोगोऽय भवति सैषाग्नेयी पवित्रा
ऽभिव्याहारा शुद्धार्थेऽभिरूपा ऽथापि शश्वदिहाग्निः
ष्टुतं तैत्तिरीया अधीयते सैषाग्निष्टुदनुग्रहाय स्यात्
स्वादिष्ठा मामदीया मेषा स्वादुमती पठिताभिव्या-
हारा शुद्धार्थे ऽभिरूपाथापौराकाहिकी भवत्यथ सत्वम्
पौष्कल भवति सुद्धांस्तस्तद्भवति यत् पुष्कल मित्यथा-
पैराकाहिक मेवाहसमासं शश्वदिह तैत्तिरीया
अधीयते नाना भक्षे-निधनानि न दाशरात्रि-
काणि मध्ये-निधनान्यनुभवन्त्यतच्छन्दस्यान्युपप्रयुङ्क्ते
आ सोम स्वानो अद्रिभिरिति तृतीयस्य बृहती सप्तदशे
साध्यासां कनिष्ठं भवत्यन एतां करोत्येषा सामन्या

तृचप्रथमः तृतीयस्थानेति बभ्रवे ऽनु स्वतवस इति षड्टचं षष्ठसप्तमयोर्विहरति सन्तानार्थी नवर्च मेतस्य प्रथमे ऽहनि तृचं कृत मुपास्मै गायता नर इति त्र्यचं सप्तमस्य समूढाज्य मेतत् स्थानसम्मितं छन्दस्ये उत्तरयो रेते रूपसम्पन्ने इत्येते रूपसम्पन्ने इति ॥ ३ ॥

अथैष कुसुरुबिन्दस्तत्र खलु बृहद्रथन्तरे ते करोति राथन्तरबार्हता ह्येते स्तोमा इति कानि तन्त्राणीति दशरात्रस्तोमं त्रिककृत इत्येके द्वैपृष्ठ्याद् द्वे तन्त्रे स्याता मित्याचार्याः प्रथमद्वितीययोरिति शौचिवृक्षिरते आह्नीनिके इति तदिदं प्रथमतन्त्रं प्रवर्तीभिः कृप्त मपकृष्य मन्यत्रोपक्रमाद् वात्यशिष्यंस्तु भवति तस्य स्थाने ज्योतिष्टोमं करोति प्रथमस्य प्रथमं राथन्तरस्य राथन्तर मित्यैकाहिके इति धानञ्जय्य एव मपर्वविलाप इति तन्विदं गोरतन्त्र मन्तविधाभिः कृप्त मपकृष्य मन्यत्रान्ताद्वात्यशिष्यंस्तु भवति तस्य स्थाने द्वितीयतन्त्रं करोति द्वितीयस्य द्वितीयं बार्हतस्य बार्हत मिति स खलु दशमे ऽहनि द्वितीयतन्त्र मुद्धृत्य तस्य स्थाने ज्योतिष्टोमं करोत्येकाहतन्त्राद्दाशि मुपजिगमिषन्नुक्तो द्रव्यागमः समेषु स्तोमेषूभयोस्तन्त्रयोः

पुनर्मनां वृहतीं करोत्युभयोर्ह्येषा निद्येत्युष्णिक्ककुभौ वा अपि समाने भवत इत्यपर द्विरात्रन्याय इवेह भवति. द्वैतन्त्र्येण द्वैपृष्ठ्येन तत्र द्वैरात्रिका उष्णिक्ककुभः करोत्यथ यत्र राथन्तरस्याङ्गस्तृचार्थो भवति तद्यथादश्ववर्तुर्वीरे व्याख्यातं तथा तत्र भवति बार्हतेष्वहस्सु यौक्ताश्व-हाविष्मते अग्निष्टोमेषु. हाविष्मत मौक्त उक्थ्येषु सौक्त मुक्थ्यसामेति. विभक्तान्युक्थानि राथन्तराणि राथन्तरेषु बार्हतानि बार्हतेषु तदेवार्काणां स्थानं यद्दूशरात्रिन्तयोः सन्नगतयोर्बार्हतस्य कविमन्तं पर्यास कुर्वीत कालेयं मध्ये वाकसामाभिप्लवन्यायेनैकविंशो ऽतिरात्रो य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशीत्यविचारमेकविंशः ॥ ४ ॥

अथैष छन्दोमवान् बृहद्रथन्तरपृष्ठ एष तत्र खलु विश्वजितं दशमं करोति स खलु विश्वजित् क्रियमाणश्छन्दोमान् प्रत्यूहति ते प्रत्यूह्यमानाः षष्ठमहः प्रच्यावयन्ति पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रतवद् बहिष्पवमानं पञ्चमस्याह्नो ऽसृग्रत प्र वाजिन इत्यनुरूप इति शाण्डिल्यायन उपरिष्टादिमं नवर्चं मावर्त्तयिष्यन् भवति. कथ मक्तस्या-

वर्त्तनं स्यादिति नवाहयोगा इमा भवन्तीति धानञ्जय्यः कथं समापयिष्यन्नवाहं नवाहयोगाः कुर्यादिति व्याख्यातः समूह ऋतावान् वैश्वानर मिति होतुराज्यं वैश्वानरीयस्य स्थाने वैश्वानरीयं त्रैककुभे उत्तरयोरेते रूपसम्पन्ने इत्युद्धरति काण्वरथन्तरमजामि हि भवति नचैतत् सोमसामैव मिडा रूपाणां वृहतीति गौरीवितापायात् पृथक् स्वाराणि करोति नाना साधुरहीन इति स यदेतान्येतानि रूपसम्पन्नानीति प्रथम माचेयं नमसोपचत्यै तदु वृहद्वयोनि बार्हत ऽहनीति स्थानसम्मिते उत्तरे इत्येते रूपसम्पन्ने इव स्वाराणि त्रैष्टुभानि माध्यन्दिनान्यान्येतानि रूपसम्पन्नानीतरडानि जागतान्याभवान्यानीडामत्तयो हि छन्दोमा इति स यदेतान्येतानि राथन्तरबार्हतेडानीति नवमे ऽहनि दीर्घतमसोऽर्कं मनुकल्पयन्त्येके ऽहर्गार्चिण स यदनुष्टुभ्येतदस्य समूढं वा न भवति तचाक्रूपारं तचसमाम्नयेऽथ येनानुकल्पयन्ति वृहत्यां वानुक्रमं मन्यमाना यथा वैतदर्गोऽर्कः सप्तमे ऽहनि कृताकृत इति समापद्यन्ते दशमे ऽहनि सामानि समूढवाजजिद द्विपदास्वनुगृह्णाति संयुक्त मेतेनाह्ना भवतीति ॥ ५ ॥

कथं दशममधर्मा मानस मिति कर्त्तव्या इत्येके तदाहुर्त्त्रायत इत्यकर्त्तव्या इत्यपरं मद्दशमं चं लुब्धश्च दशरात्र इत्यथाप्यकृतेन विश्वजिता. मानसं मध्य-शाययिष्यदथाप्यनुष्टुप्संयोजनात्ते जागत मिदं स्थानं भवत्यथापि सचोत्पादास्ते ऽहीनोऽयं भवतीत्य-भिचर्यमाणायज्ञ उत्तरः स खल्वेकाहकृतस्ते व्याख्या-तास्तस्य सवनभाजस्तोमाः. सम्यावक्षाजो वेति त्रिवा-रयन्त्येवं सवनस्तोमाः सम प्रयुक्ता भविष्यन्ती-त्युक्थ्यसंस्थं ज्योतिष वृहत्पृष्ठं कार्हतं तच्च द्विती-यं. हि स्थानं मापन्न मिति. तत्र यो दृष्यविकार उक्थ्यत्वाच्च वृहत्पृष्ठत्वाच्च स भवत्यपि च समन्तं समन्तीकारायाथात एकादशरात्रो दशरात्रान्ता अहीना द्वादशाहप्रभृतीनि सत्राणि. किं मेकं स्थान मन्तरीया मिति वैकादशरात्रं करोति पृष्ठ्याव-लम्बस्य पञ्चाहः. पृष्ठ्यस्तोमस्य प्रष्ठ महरिति पयसा प्रष्ठ मह रभ्या राजति स × × ता * पयोधापोव द्वे वृहत्यौ स्वरावृक्तौ वृहती † पुनः कारवु रथन्तर स्वं लोक मित्यज्ञाम्यर्थं व्याख्यातास्छन्दोमा दशमस्य स्थाने चतुष्टोमं करोति कस्य हेतोरिति छन्दोमस्य

* 'स्वरांदुक्त'—इति ख। † 'वृहतीति'—इति ख।

ममेत्यग्निष्टोमस्यात्यग्निष्टोमꣳ स उ छन्दो रथन्तरपृष्ठो ज्योतिष्टोमस्तनो यथा दशम महरिति ॥ ६ ॥

कथं दशमधर्मा मानसच्छन्दोमस्य छन्दोमवत्यग्निष्टोमस्यात्यग्निष्टोमꣳ स उत्तररथन्तरपृष्ठो ज्योतिष्टोमः कथं दशमधर्मा मानसमित्यकर्त्तव्या इत्येके स्वेन नामधेयेनैकाह आशिष्यते चतुष्टोमो ऽग्निष्टोम इत्यथापि न दाशमिकं लिङ्गं दृश्यते यथैतद् बहिष्पवमानस्यावृत्तिः साम्नां विप्रच्यावन मनुष्टुभः पराचीर्विकीर्षेति कर्त्तव्या इत्याचार्या ये ऽन्ये मानससंयुक्तेभ्यः संस्थापनीयं मानसं चतुष्टोमो ऽग्निष्टोम इत्यथाप्यकृतेन विश्वजिता मानसमध्यगाययिष्यदथापि सर्वोत्पादं नाहीनक्रतावचिकीर्षीद् दृश्यते तद्दशम मृते मानसात् तथा मानस मृते दशमाच्च चैतद्दशमस्य यथाव्याख्यातं दशमसंयोगास्तु कर्त्तव्या एष आचार्यसमयो ऽथापि तन्त्र मद्दर्शाचे बलिष्ठं ब्रुवत उच्चा-स्वादिष्ठे दाशमिक्यौ दृश्येते अथापि स्थानेन भागागमेन तच्चोपविना छन्दोम्येनेति स चैव चतुर्विंशो दाशमिको ऽन्ते दृश्यते यदेतत् स्वेन नामधेयेनैकाह आदिश्यत इति बहुधैकाहाः स्वेन नामधेयेनादिश्यन्ते यथैष एवाश्वचित्राचे ऽभिप्लवे च

त्रिककुदः इत्यथैनां नाहीनिकृंतमान् ब्रूमहे यथो एतस्मिन् द्वाहमिकं लिङ्गं दृश्यत इति ब्रूमो येषामाख्या- ख्याति संस्थानं तु सामव्यूहस्य समूढो दशरात्रो दृश्यते च बहिष्पवमानस्य नावृत्तिरन्यासु चानुष्टुप्सु दशमतश्च यथा त्रिककुभः ॥ ७ ॥

तत् किम्प्रभृतयोऽहीना इत्युक्थ्यप्रभृतय इति बहुशाखिनो मुहूर्त्तमात्रा अग्निष्टोमे स्तनशस्त्रैर्नाभि- धीयन्ते ता अद्यापि विधीयत इति शश्वदङ्ग षोडशि- प्रभृतय एव भवन्त्येवैष चतुर्थो भागः प्रथमं स्थानं लभते सर्वे भागा आप्यन्ते सर्वे भक्षा यः स पुराहीनो भवति सोऽद्याहीन इति शश्वदङ्गातिरात्रप्रभृतय एव भवन्ति सर्वमादित्यचरितमभि विधीयत उभौ वर्णौ कृतकृतिरेवात ऊर्द्ध्वं शश्वदङ्ग द्विरात्रप्रभृतय एव भवन्ति द्वे पृष्ठे चर्यो लभते द्वयान्यहानि राथन्तर- बार्हतानीति तदिदं बृहदतिरात्रे स्थानं तदद्य स्थानं लभत इति शश्वदङ्ग त्रिरात्रप्रभृतय एव भवन्त्येव महर्भाजो ऽहस्सवनभागाः स्वस्थानास्त्रिरात्रावनुष्टु- ब्विति शश्वदङ्ग चतूरात्रप्रभृतय एव भवन्त्येवैष चतुर्थो भागो ऽहर्भजते यथा पूर्वे भागा इति शश्वदङ्ग पञ्चरात्रप्रभृतय एव भवन्ति शुध्यन्त्यु हैतच्चतुर्थमहः

पञ्चमे ऽहनि रात्रिः सञ्जत इति वा शश्वदङ्ग षड्-रात्रप्रभृतय एव भवन्त्यचैष चतुर्थो भागो भूयिष्ठभाग भवति शश्वदङ्ग सप्तरात्रप्रभृतय एव भवन्त्यासप्तान् नानात्वानि वर्त्तन्ते नाना साधुरहीनं इति शश्वदङ्-गाष्टरात्रप्रभृतय एवं भवन्ति शुध्यत्यु हैतत् सप्तम महरष्टमे ऽहनि रात्रिः सञ्जत इति शश्वदङ्ग नव-रात्रप्रभृतय एव भवन्त्यष्टरात्रे पुनरभ्युद्धृतेषु भागेषु जगत्यस्थाना भवति सायस्थानं लभत इति शश्वदङ्ग दशरात्रप्रभृतय एव भवन्त्यालद्विपरार्द्धा महर्नानात्वं यद्दशम नाना साधुरहीन इति शश्वदङ्गैकादश-रात्रप्रभृतय एवं भवन्ति शुध्यत्यु हैतद् दशम मह रैकादशे ऽहनि रात्रिः सञ्जत इति ॥ ८ ॥

अथाय द्वादशाहो ऽहीनो भवती३ सत्र मित्य-हीनो भवतीत्याहुरेको दीक्षेतेति भवत्यथापराहीनि-कान्यहानीत्याचक्षते दाशरात्रिकाण्यहान्यथापराह यज्ञौदीवितेनाहीनानि शश्वदङ्ग त्रिरात्रप्रभृतय एव भवन्त्येव सहभाजो ऽह:सर्वभागोऽ स्वस्थाना रात्राव-नुष्टुबिति शश्वदङ्ग चतूरात्रप्रभृतय एव भवन्त्या-थापराह यजमान मेवैतया वर्द्धयन्तीत्यथापि वेदपे वदति यजमानं वा अनु प्रतितिष्ठन्त मुद्गाता प्रति-

तिष्ठतीत्यथाप्यस्मिन् दक्षिणाप्रवादो भवति ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैदर्श्वभ्याꣳ सहस्रा- ण्यादित्सता मिति दक्षिणावन्तो ऽहीना इत्यथापि शश्वदनेनाध्वर्यवो याजमानं प्ररिचयते यथाहीने- नेति सत्र मित्यपर मुभयतो ऽतिरात्रो भवत्यन्यतरतो ऽतिरात्रा अहीनाः समाहितप्रायणीयोदयनीयो भवति व्याहितप्रायणीयोदयनीया अहीना अथा- प्यन्वह गौरीवितं भवति नानास्वरा अहीना अथा- प्यस्मिन्त्सत्रवादस्त्रो भवति यो वै देवानां गृह- पतिं वेद स वै गृहपतिर्भवति भारद्वाजायना वै सत्र मासत स्तोमो युज्यते सचियेभ्यो ऽहंभ्यः प्रतिष्ठायैव सत्र मासते ऽङ्गिरसो वै सत्र मासत गौपायनानां वै सत्र मासीनानां यतः सत्रादुदस्थाता३ स्थिता३ इत्युभयं भवतीति लामिकायनं उभयथा ब्राह्मणं भवत्युभयथेष्टं वेदव्यत उभयेषर मथ प्रत्ययं स्तंदो- ऽस्मिन्नहीनवादाः प्रत्ययत्वात्ते भवन्ति सत्रन्तु भवति सत्रकारोऽस्य भवति नैषाहीनेनैन सत्र मित्यपरं यत्त- दप्येव मिव ब्राह्मणं भवत्यन्यस्मै वै कामाय सत्र मन्यस्मै यज्ञो न तत् सत्रेणाप्नोति यद्वैकं यज्ञो न तद्यज्ञेनाप्नोति यद्वैकꣳ सत्र मिति तद्यथाश्वत्थलो

वृद्धो नैवाश्वत्थ इति वत्सनायनो अनश्वत्थ इति त्रयो-ऽहीना इति धानंजय्य एकाहाहीनोऽहीनाहीनः सत्त्राहीन इत्ययं ज्योतिष्टोमो ऽतिरात्रः षोडशिमाने काहाहीनोऽत्र हि न किंचनैकाहिकं कर्म हीयत इति द्वादशाहो ऽहीनोऽत्र हि न किंचनाहीनिक मह-हीयत इति गवामयनं सत्त्र महीनो ऽत्र हि न किंचनं सात्त्रिक महहीयत इति तदिदं कुशला भृतयस्तस्याहीना इति तदपि शश्वद् ब्राह्मणं भवद् दिष्ट मिति शाण्डिल्यायनो यस्य स्यादहीन इति यस्य तु स्यादहर्वसंयेयेति द्विरात्रप्रभृतयस्तस्याहीना इति तदपि शश्वद् ब्राह्मणं भवति प्रजापतिर्यज्ञक्रतून-सृजताग्निष्टोम मुक्थ्यं षोडशिन मतिरात्रं य एते-द्विरात्रप्रभृतयोऽहर्गणा अब्रुवन् तस्मान्नापि महासो-रिति तस्मादेवं तेऽहीना इत्यहीना इति ॥ ६ ॥

अथातः सत्त्राणि तेषां द्वादशाहः प्रथमस्तस्मिन्नु-पक्लृप्तानि तत्र द्वे उपस्थिस्थाने अन्तरेणातिरात्रौ त्रं दशरात्रश्च यथैकैकभाक्त्रार्थो भवति व्रत माहरेत्य-तदेकार्थं दृष्ट मिति तस्य तदेव स्थानं यत्संवत्सरे द्वाहार्थे गोआयुषी तयोस्तदेव स्थानं यत् संवत्सरे त्र्यहार्थे त्रिकद्रुकाश्चतुरहार्थे क्रतश्चतुर्थान् पञ्चाहार्थे

ऽभिप्लवपञ्चाहं षडहार्थे ऽभिपवः सम्प्लवत एतेन न्यायेनैष * एकोत्तरकल्पः क्रमत आ चत्वारिंश- द्रात्रा दुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तेत एतं रात्रिसत्रन्याय इत्याचक्षते यदेवापवदति तद् व्याख्यास्याम स्तत्रास्मिं स्त्रयोदशरात्रे कथं व्यूह- समूहावित्ति समूढः स्यादित्येके समूढो ह्येनं सर्व- स्तोमो ऽन्ववैतीति व्यूढः स्यादिति गौतमो ऽनादिष्टः कल्पेन समूढो ऽथापि छन्दोयोगपर्वणि भागसमाप्तौ चापधीयते ऽथापि कृत्स्नो ऽयं दशरात्र इति व्यूढ- मेवैनं सन्तं समूढः सर्वस्तोमो ऽन्ववैतीत्यथापि नादेच्यत्सोमसाम गौरीवित चादेच्यत्कथं दशम- धर्मा मानस मित्यकर्त्तव्या इत्येके दशमेऽत्र लुब्धश्च दशरात्र इति कर्त्तव्या इति गौतमो ऽनाकृतेन व्रतेन मानस मप्रविश्याज्यते ऽथोपि वाचो दशक्रमः मन उपकृतं कृत्स्नोऽयं दशरात्र इति चतुर्दशरात्रे पृष्ठं रूढावृत्तं करोति सैषा मध्यावृत्तिर्यच्चातिरात्रात् पृष्ठ मुपयन्ति प्रथमस्याह्नो ऽस्य प्रत्न मनुत्स्य इत्यजाम्यर्थो ऽथ खल्वत्र त्रयस्त्रिंशे अहनी सन्निपततः केनाजा- मीत्यह एष सामान्यादपि वा कण्वरथन्तर मनु-

---

* "अभिप्लवन्यायेनैष"—इति ख।

कल्पयेत् पूर्वस्याह्न आमेव उत्तरस्य वा मध्यन्दिने पृष्ठम् उत्तरस्मे विषुवत्स्थानीयो वृतं पञ्चदशरात्रस्य पृष्ठम् एवोत्तरस्य तत्राग्निष्टुत मुप दधाति चतुष्प्राये ब्रह्मस्यानवच्चिकीर्षं स्थाग्निः प्रत्नेन जन्मनेति होतुराज्य मजामित्वाय व्याख्याता अन्यतोऽतिरात्रः ॥ १० ॥

न्यायकृप्त मा सप्तदशरात्रात् सप्तदशरात्रं ऽभिप्लवपञ्चाहः संप्लवेति ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके यावत् षट् तान्नेयुः षडेव सत्त्वस्तन्त्राण्यापादयेयु रित्यापादयितव्यं स्तन्त्राणि मन्यत इति गौतमो ऽहर्गणप्रत्ययनायो ह्येव मभविष्यत् त्र्यहाद् द्वाह मेक मिव ब्राह्मणं भवत्यनन्ता वा एता यत्पञ्चाहविधा इत्यन्ताहर्न्नीतः षष्ठ मुप्रैतीति स वै पञ्चाहतंत्र एवाभविष्यन्न षष्ठात् किञ्चिदत्याहरिष्यदिति प्रत्याहरेदिति गौतम एव मिव ब्राह्मणं भवति पञ्चम ऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य सा संस्था रथन्तरबृहत्पृष्ठाः पञ्चमस्याह्न एष प्रत्नानुरूप इत्यजामित्वार्थो व्यावृत्त्यै पृष्ठाभिप्लवयोः श्यैतनौधसब्रह्मसामा पौष्कलस्त्र्यौष्णि ह्यभीवर्तासुज्ञानयो रन्वपायं स्वासु

ध्यैतन्नौधसे अभीवर्त्तकारिता हि प्रगाथा इत्ये-
तेनैवोत्तरे व्याख्याताः षाष्ठिकानि पञ्चमस्याह्न
उक्थानि तत् कुशला मुद्धरति गूढं द्विपदा अनन्तेना-
चिकीर्षीत् तच्चैतद्वैधमवाह नवमादन्तान्वितं तद्दा-
देतास्तु प्रजिष्ठं त्वा ववृमह इत्येता आपन्नाः पञ्चम
मह्नर्भवन्तीति सौश्रवस मारुत धेति विचारयन्ति
वैभक्तं सौश्रवसं पाञ्चमिकं मारुत मथ यत्र-
भिप्लवयो रात्रिसत्त्रेषु कथं कल्पविचारितानीत्य-
कर्त्तव्यानीति शौचिवृक्षिर्णान्यत्र संवत्सरानुसंवत्सर-
सम्मितासु च नेतिकर्त्तव्यानीति गौतमो यावन्ति
यावन्त्यंभ्यस्त्रुवीतेति विहितान्यप्रतिषिद्धान्यथाप्येव
मामिनरा संवत्सरस्येति विंशतिरात्रे द्वाहार्थे सति
विश्वजिदभिजितौ करोति कस्य हेतोरिति सम्पूर्णां
विराजं सत् मुपक्रान्तावेतौ वैराजौ वा पञ्चसूक्तैः
स्तोमैः पृष्ठैरिति यद्वैव पृष्ठ्यमात्रौ तौ पृष्ठादनन्त-
रिताविति ॥ १९ ॥

पूर्वस्मिन्नेकविंशतिरात्रे तृतीयेऽभिप्लव आवृत्तो
भवती३ अनावृत्त इत्यनावृत्त इति शौचिवृक्षिर्न
ह्यावृत्तिर्निर्ज्ञायते ऽथापि कथं समाह्नो विषुवान्स्या-
दित्यावृत्त इति गौतमो रोहप्रत्यवरोही सत्र सुपक्रान्तौ

विषुवानिति यदेतदनादिष्टावृत्ति रिति नाभिप्लवस्या-
वृत्तिः क्वचनादिश्यते ऽर्थ एवावर्त्तयतीति यदेतत्
कथं समास्तो विषुवान्स्यादिति दृश्यते षडहो विषु-
वत्स्थाने चतुर्दशरात्रे तथा समास्तः संसत्स्वन्य-
थापि यदनावृत्तो ऽभविष्यदतिरात्रो ऽभिप्लवः षडहो
द्विरात्रो द्वावभिप्लवौ षडहा वतिरात्र इत्यभविष्य-
दिति रूढावृत्ताविति स्वनो नाना दिशत्युक्थ्या
नुत्तरस्मिंस्त्स्वरसाम्नो ब्रुवते पृष्ठ्योपधानात्तत्र नान्येव
विधनानि यान्येकविंशत्यहकारिणां श्यैतनौधस-
ब्रह्मसामानः स्वरसामानः पौष्कलश्चर्ध्यौषिणहा विषु-
वतः साम इत्यस्य लोक आभीशव मभीवर्त्ता पाया-
च्छायन्त इव सूर्यं मिति विकर्णं मिन्द्र क्रतोर पाया
न्यायक्लृप्त मां संसन्नः संसत्सु पृष्ठ्य विषुवत्-
स्थामीय करोत्यनिरुक्तं च तृचस्त्रिंशतं स्वलूत्तरस्य
त्र्यहस्य स्तोमैरभि विधत्ते वै विषुवतीय मत्याधि-
रसन्तस एष आवृत्तः स्तोमः पर्वस्त्र्यहो ऽनुपूर्वस्तोम
उत्तर एत विशालः पृष्ठ्य इत्याचक्षते पृष्ठ्यस्तोमं पुर-
स्ताच्चोपरिष्टाच्च रूढावृत्तामनिरुक्तं सप्तमं मात्र सम्पूर-
णायैकाहं तत्रानुष्टुभिबृहत्करोत्यजाम्यर्थो ऽथापि
वृतस्थानो भवत्यौपोत्तमादुभयसामवतमिति ॥ १२ ॥

न्यायकृप्तम् आ त्रयस्त्रिंशद्रात्रात् पञ्चाहविहितं तत्कतमोऽयं पञ्चाह इति पृष्ठ्यस्तोमः पञ्चाह इति कापटवोऽनादेशे कृप्तमन्यं प्रतीयामोऽथापि यत्र यत्र चैकाष्टको भवत्यादिशत्येवैनं तत्तत्राथाप्याह नानां ब्रह्मसामान्युपयन्तीत्येष नाना ब्रह्मसामा भवत्यथापि दाशरात्रिकैरहोभिः पञ्चाहान् संवर्गयन्ति पृष्ठ्यस्तोमपञ्चाहस्त्वादेवाथाप्याह त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रिवृत् प्रथमं दाशरात्रिकं तदेवावृत्तश्चोदयनीयं भवत्यथापि विश्वजिता जानीमो विश्वजिद्यत्र पृष्ठ्यं विलोपसन्नवैतीति स वै नूनमभ्यासतोऽभ्यस्तो ह्यहीनेष्वनभ्यासस्त्वेतु मन्यामहे न हि विज्ञायतेऽभ्यास इत्यभिप्लवपञ्चाह इति गौतम आदिष्टः कल्पेन भवत्यथापि न पृष्ठ्यपञ्चाहः कृतोऽकृतो विश्वजितेन पृष्ठ्यस्तोमपञ्चाहोऽभिप्लवपञ्चाहस्तु विद्यते तं कृतवदतिक्रामत्यथापि कृत्स्नावेव पृष्ठ्यस्तोमौ नाभिप्रयोगं लभेते कुतो विलुप्तौ लभेयातामित्यथापि शश्वदेकेऽध्वर्युर्वाऽभिप्लवपञ्चाहमादिशन्त्यथापि कालबविनो व्यूहेनादिशन्त्यतिरात्रो ज्योतिर्गौरायुः पञ्चाहः स द्वितीयः स तृतीयो विश्वजिदतिरात्र इति यदेतदनादेश इत्या-

देशजातिरेषा भवति यदधिकारो यद्देवद्यच यत्र चैकाहको भवत्यादिशत्येवैन तत्र-तत्रेति पृष्ठास्तोम-पञ्चाहो वा अयादिश्यते पृष्ठावलम्ब उत्तरे नव-रात्रे छन्दोमवति दशरात्र इति यद्देतन्नाना ब्रह्म-सामन्युपयन्तीति कारणकारित मेतद्भवति यद्देतद्दा-शरात्रिकैरहोभिः पञ्चाहात्संवर्णयन्तीति सङ्ग्राभि-प्राय एतदाह द्वौ पञ्चाहौ दशरात्र इति यद्देतत् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीत्युक्तम एतत् त्रयस्त्रिंश-शद्रात्रे ऽभिवन्दाब्राह्मणं वदति त्रयः पञ्चाहाः पुर-स्तात् त्रय उपरिष्टादिति यद्देतद्विश्वजिता जानीम इति नेह पृष्ठार्धेन विश्वजितां गच्छति* विषुवदर्थं नैष आगच्छतीति नाना ब्रह्मसामान्युपयन्तीति यद्दै पृष्ठा-योरनुव्यत्ययं यैतन्नौधसे व्यत्यहरिष्यद्धुयान् व्यत्यय आकाचयो ऽभविष्यत् प्रतिपदा साज्यांना मौक्षिणहयो रिति श्यैतनौधसंवर्गानि बाहद्रथन्तरपृष्ठाद्याद्दु विश्व-जितं विषुवन्त मित्तौ यदपैति तस्यैतस्मिन्ननुग्रह इति ॥ १३ ॥

॥ इति निदानसूत्रे नवमः प्रपाठकः ॥

* "विश्वजिदागच्छति"—इति ख।

## ॥ अथ दशमः प्रपाठकः ॥

अग्निर्मूर्द्धा दिवः ककुदित्युक्थमग्नये करोति कस्य हेतोरिति सामान्या मूर्द्धन्वती वैषुवतीयेऽभिरूपा तच्चैतत्सत्रासाहीय मापन्नञ्च विश्वजित मपि च वैषुवतीयं विषुवत्युभे षोडशिसामनी करोति वैषुवतीय मन्यत्र वित्सन्नुत्तमः पञ्चाह आवृत्तो भवतीत्यनावृत्त इति तद्व्याख्यातं पूर्वस्मिन्नेकविंशतिरात्रे सत्र मासत उत्तरे तच्चैते सामर्थं निदधात्येकविंशतिरात्रञ्च द्वादशाह एते नानात्वक्लृप्ते इति पञ्चाहक्लृप्त मुत्तमं प्रथमे त्रिषमयुक्ताः पञ्चाहाः हन्त पञ्चाहानेव करवाणयेवं पञ्चसीः समाधिरिति तत्र कथं बृहद्रथन्तरे इति यथालोक मेव न हीह तद् ब्राह्मण मिति कथ मु ब्रह्मसामनीति श्यैतनौधसे एव न हीह तद् ब्राह्मण मिति यस्य तु स्यात् स एवायं पञ्चाह इति तथैव तस्य बृहद्रथन्तरे तथा ब्रह्मसामनीति ते चेद्यथालोकं बृहद्रथन्तराः प्रथमस्य प्रथमंस्याङ्ग एष प्रत्नानुरूप इत्यजाम्यर्थो यद्यु वा अयथालोकं बृहद्रथन्तराः प्रथम एवाथोपरिष्टाद्यद्यु ह यथालोकं बृहद्रथन्तरा उत्तरे बृहन्निधनं वार्कजम्भ मनुकल्पयेद्यद्यु वा अयथालोकं बृहद्रथन्तरा उत्तम

एवा ऽथ खल्वाह यदिश्वजिति छन्दोमानुपयन्तीति कथेदं ब्राह्मण७ स्यादिति षाडहिकाना७ समस्ताना मिति चतुरात्रता मिति छन्दसा मिति त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टादिति त्र्यायकृप्त मां विधृतिभ्यो. त्र्यायकृप्त मां विधृतिभ्यः ॥ १ ॥

अथैता विधृतयो भूतानां विधारिण्यस्त्वेतान- हर्गणान् करोति त्र्याह७ षडहं दशाहं द्वादशाह मिति तानतिरात्रैर्विधारयत्येव७ सर्व मेवं विधृतं भविष्यतीति कानि तन्त्राणीति दर्शरात्रस्तोमविकृत इत्येके ज्योति- ष्टोम इति शौचिर्वाचिरनादेशं क मन्यं प्रतीयामो ऽथाप्याह ज्योतिष्टोमस्यायनेन यन्तीति शतसंवत्सरे ज्योतिष्टोमायनेन यन्तीति वैतदवोचदिति कौसुरु- बिन्दे इति गौतम एतेन कल्पेनाभिदृष्टे भवत इहो तद- भिरूपतरं यथो चाहीने सर्वे त्र्येव समासो ऽभिरूपतरो यथो चाहीन इति व्याख्यातानि संन्धिसामान्येवं चेत् संन्धिषाम स्यात् कौत्सस्य लोकं उद्द७शीय मेतेने- डाकामस्य सिध्यत्यजामिकल्पस्येति तदादेतास्वा त्वा विशन्त्विन्द्रव इतोऽता रात्रेर्विकृतौ दृष्टा इति नित्यासु वेति विचारयन्त्यथ्यकारित मद्द७शीय७ स किमर्थो

नित्याश्च्रावयेदिति पञ्चदशानां दशमस्य नानदं षोडशिसामैवं छन्दसा मनन्तरं यस्तु सन्धिसामैव भवत्यथौशनकावि समाचारयिष्यन्तथा रथन्तर मपचित्या रथन्तरं सञ्चरते ऽथापि काव तृतीयसवनेन समधिचारयिषीत्तइशेनौशनं तचैने 'वैश्वज्योतिषवासिष्ठे अपुरस्तात्स्तोभे पदानुस्वारे यद्यौशनकावे एकविंशेष्वकान् करोत्यन्तर्पर्थिणो हि स यन्नवमप्रभृतिष्वन्तर्पातित्वादेवाथाप्येते सप्तमप्रभृतिषु दशरात्रे दृष्टा उपपन्नं द्वादशाहे नवमप्रभृतिषु 'प्रयुञ्जीरन्निति कावस्यचं दीर्घतमसोऽर्कं एतासां हि स्थाग मापन्ने द्वादशे ऽहन्युत्सेधनिषेधौ करोति दशभादन्तान्वितौ यमातिरात्रास्वादित्याना मष्टावतिरात्रान् करोत्यष्टौ यमा आदित्या इत्यादितरानां द्वन्द्वदर्शनादभिप्लवानिरात्राणां द्वन्द्वानि करोत्यथ खल्वायुस्तोमे ह्यभिजिति वाजामिकल्पे सौभरं करोति तत् खलु हारिवर्णस्यचं करोत्ये तासां हि स्थान मापन्न मिति ॥ २ ॥

अथैता आङ्गिरसाव्यञ्जना: प्रजापतीषसा मुपक्रतास्तं च सर्वस्तोम मुपहारयेत्येषो ऽहस्त स्तोमतः संस्थातः पृष्ठत इति तद्य यत् षड्विंशस्थान मेव

मपर्वविलोप इत्युत्तसाकभिप्लवा वावृत्तौ भवता३
अनावृत्ताविल्यनावृत्ताविति गौचिवृत्तिर्न ह्यावृत्ति-
र्विज्ञायते ऽथाप्यमध्ये सर्वस्तोमो मध्यस्थानो विषुवा-
नित्यावृत्ताविति गौतमः प्रतिष्ठाकामसत्र एतस्मिन्
स्थाने क्लृप्तं करिष्यन् भवति नैतदन्यत्र मध्यरद्वाभ्तो
भवतीति यदेतदनादिष्टावृत्तिरिति नाभिप्लवस्या-
वृत्तिः क्वचनादिश्यते ऽथ एवावर्त्तयतीति यदेतद-
मध्ये सर्वस्तोम इत्यपर्वविलोपायैतद्भवति पञ्चाम-
ष्टामध्ये विषुवन्तं यथा त्रयोदशरात्रे संसत्स्वपि
संवत्सरसंमितासु प्रायणीये चतुर्विंशं प्रतिषिध्यत्
त त्रिवृदेव कार्य मित्याह निष्पन्नचोदितत्वादेतद-
पूर्वं प्रायणीयं चेति स्तोमविकार मेके तस्यैवाधि-
काराच्चतुर्विंश एवैवं कार्य मिति निष्ठा तथा हि
ब्राह्मणं ता एताः संवत्सरास्मि मुपक्लृताश्च
यदेतान्यहान्येवं संवत्सरस्य प्रयुक्ततमान्यहानि
भविष्यन्तीति तृतीये ऽभिप्लव इषीवृधाग्नि समन्तं
कुर्या३न्न कुर्या३दिति न कुर्यादित्याहुः पृष्ठ्यसान्निपा-
तिके ह्येते भवतो न चेह पृष्ठ्यो भवतीति कुर्यादित्य-
परं नाना पर्वणोरिमे सन्तामार्थे भवतो नानापर्वणो-
रेवैते अहर्गणस्यैकाहस्य भूयसा चैवं सांवत्सरिकाणां

इति प्रतिष्ठाकाममसत्र मुत्तरं तदाज्ञनाभ्यज्ञनाभि-व्याख्यातं न्यायकृप मेकषष्टिरात्रा दथैतदेकषष्टि-रात्रं संवत्सरसम्मितास्थान मेव तत्र नवाह मभितः पृष्ठौ करोत्येवं सर्वं सांवत्सरिकं द्रव्य मनु-गृह्यात इति ॥ ०४ ॥

अथ केनासंस्तोमान्यभि विदधीतेऽतिरात्रिसत्र-न्यायेनेत्याहुर्यथा शतरात्र मित्यपि वा दशरात्रञ्च व्रतं चान्ते निधाय यत् सांवत्सरिकाणा मह्नां सम-वहारः सिद्धेत्तथा कल्पं कुर्वीत यथा संवत्सर-सम्मितास्वपि वा यत्र भागस्तोमानां समविभागः सिध्येत्तस्य कल्पं कुर्वीत यथा सवितुः ककुप्सु ज्योति-ष्टोमेनं वैष ऊनस्य पूरयितेत्यथ प्रायणीयोदयनीय-योरतिरात्रयोरादिशत्येकत्र षोडशिनं नैकत्र तत् कथं स्यात् षोडशीति यथा विराट्सम्पदं सम्पत्सं-मीनां मन्यीत तथा कल्पं कुर्वीत द्वादशाहस्य च गवामयनस्य विराट्सम्पदं षोडश्युपक्रान्तो स्थानुप-पद्यमानायां प्रकृतौ निर्णीय यथा मन्यीत तथा संशयेषु प्रतिपादयेत्तेषां यानि रात्रिसत्न्यायेन वर्त्तन्ते षोडशिमन्तेन तत् यथा द्वादशाहेऽथ यत्र रोहप्रत्यवरोहौ सत्र मुपक्रान्तमषोडशिकौ तंच यथा

गवामयने यत्रानुमध्यꣳ षोडशिकौ यत्र यत्रो न दृश्येत षोडशिमन्तौ तत्र तत्र कार्त्स्न्यायापि वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति षोडशिमन्ताविति ॥ ५ ॥

अथातः सांवत्सरिकाणि तेषां गवामयनेन सामेति व्याख्यातं तद्यदप्रवदति व्यावृत्यर्थं वा तदपि ब्राह्मणेनैव कारणं वदति तत्रादित्यानामयने उद्भिद्बलभिदौ मात्रासम्पूरणाय करोति तत्रैक इन्द्रक्रतावुत्सेधनिषेधौ कुर्वन्त्येष औत्तरपाक्षिक इति तत्र निन्दा यत् षट् प्रगाथा भवन्त्यष्टौ प्रागाथिकानीति यथासमाम्नायन्त्वेवैवं पक्षयोः समाप्तिरिति पञ्चदशत्रिवृद्भ्यामुपहिते गोआयुषी ते पञ्चदशत्रिवृद्भ्यां प्राचिक्रमैषी छन्दोमस्तोमं दशरात्रं करोति पशूनां छन्दोमा इति तस्यान्ते चतुर्विंꣳशे सन्निपततस्तत्र पञ्चविंꣳशं करोति नानात्वार्थः स उ चतुर्विंꣳश एव भवति चतुर्विंꣳशो ह्येवैष ऐकाहिकप्रस्तुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे अथापि स्तोमक्लृप्तेनाथाप्येवं तावन्तः पृष्ठोपाया यथा गवामयने समूहति बार्हद्रथन्तरपृष्ठावुद्धरति षोडशिनं चतुर्थाहिराजा मन्वपायꣳ स्वराजोपेयुः स्तोमस्य वा

लोभादन्यथापि यद्यु हैम मेकविंशम् मकरिष्य दश-
यिष्यक्छन्दोम्यादिदि छन्दोमं मेकविंशस्यान्न वैक
मेकविंशो कृतावनेकविंशस्तथेह भवतीत्यथाप्येवं
तावन्तः षोडश्युपाया यथा गवामयने ऽथाप्येवं पञ्च-
दशसप्तदशरात्रस्य सिध्यति षट् स्तोत्रीयाः पञ्च-
दश मतिरिच्यन्ते त्रीण्यत्र सन्तनीत्येकास्तावानि
तेभ्यः षट् प्रस्तावा लुप्यन्त एव मेषा पञ्चदशसम्पत्
सिध्यतीति ॥ ६ ॥

दशमस्य चतुस्त्रिंशमेके ऽग्निष्टोमसाम कुर्वते
छन्दोमताये चतुर्विंश मेक एकाहस्तोमो भवतीति
त्रयस्त्रिंशन्त्वेव स्यात् क्रियमाणे ह्येवैतस्मिन् पुरा
छन्दोमस्तोमं मेतदहर्भवतीति यथाभूयस्त्वेनाथाप्याह
चत्वारश्छन्दोमा इत्येष एव संशय एकस्तोमेषु
द्वादशाहेषु सर्व एव द्वादशाहो विकृतः स्यादित्येके
द्वादशाहे च क्रियमाणे क्रिमर्थो ऽवयव प्रतीया-
दिति कृतप्रमाणाः संशया भवन्तीत्यपरं ते पश्या-
मोऽन्यावर्तिरात्रौ कृत्वाहाभिजिद्द्वादशाहो विश्व-
जिद्-द्वादशाह इत्यथापि नानापदि रात्रेः ससन्धि-
कायाः स्तोमविकारो विद्यते सा कथं संशयेषु
प्रतीयेतेत्यथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयाम् प्रत्य-

कल्पयिष्यदथैतेन सर्व एकस्तोमा व्याख्याता अप्यहीनेष्वथ षोडश्येकविंशस्तेमो वा स्यादपि वा ये प्राक् त्रिणवत्रयस्त्रिंशाभ्यां मंहस्तोमं तेष्वन्विषाठेकविंश मुत्तरेष्विति तौ खल्विमौ द्वादशरात्रौ भवत उभयत्राह दशमंधर्मा मानसे तु विचरयन्ति पूर्वस्मिन्नित्येके एषो ऽयुक्स्तोमो विकृतो नानापृष्ठे धर्मीत्युत्तरस्मिन्नित्यपर मेष स्थानस्थे ऽथापीदं यंत्रनाम्न मेतदन्ते ऽभिरूप मथापेतं व्रतस्य मसंसंख्यावाव्यवायेन भवत्यथापेतं त्रिवृत्-पञ्चदशस-प्तदश-रात्रयोः सिध्यत्यथापि यत् पूर्वस्मिन्नकरिष्यन्नहीनाकृतेन मानस मध्यशाययिष्यदथापि यत् पूर्वस्माहशरात्राद् बहूपैति तस्मैतस्मिन्ननुग्रह इत्यश्व आयूंषि पवस इत्युत्तरस्य दशरात्रे करोति कस्य हेतोरिति शिशुंत्वत्र मिदं भवति सैषाग्नेयी पठिताभिव्याहाराशुद्धार्थे ऽभिरूपाथाग्न्याग्नेय्य आङ्गिरसः सैषाङ्गिरसी देवतेति ॥ ७ ॥

प्रतिष्ठाकामस्य मुत्तरं तत्र षोडशिकाम् मासभाजो हर्दावृत्तान्निवर्धात्येवं सिद्धौ रोहप्रत्यवरोहाविति व्याख्यातं व्रतं त्रिषुवांस्तत्रोक्त मयनेष्वपि पृष्ठास्तामे विहृतः स्यादित्यथापुरोदाहरन्ति

यज्ञसमास उत्तरं तच्चैतानि वादितानि स्थानान्यति-रात्रः शौनासीर्यो मासो दशरात्रो महाव्रत मिति कर्त्तव्यानीत्येकं एष सत्रन्याय इताकर्त्तव्यानीत्यपर मेव पुराणं वेदयन्ते ऽध्याप्यनादिष्टः प्रायणीयो व्यूढेन भवति तत्र यत् पुरस्तादतिरात्र मकरिष्यं लुप्तो रोहो ऽभविष्यदपि च सुत्याऽ हविर्यज्ञा वाव-स्थिष्यन्निति यज्ञसमासत्वाद्गोचासमासो हविर्यज्ञ-मक्रमत्वादल्पकैश्चमसैर्भक्षयन्त्यथ खल्वत्वं द्वौ गृह-पती सन्निपातनो होत्राध्वर्यवेनैकेन सुवर्त्तये इव स एष बृत्यर्थ एव द्वितीयः स यज्ञपतिरितङ्गास्थान मिति स्वर्गकामस्य मुत्तरं तत्र संवत्सराभिप्रयोगो भवत्यतं यज्ञतपसोरभिवृद्धिरिति तत्रोक्त मय-नेषु तेषां यान्येकाहैर्वर्त्तन्ते गौरीवितानि तानि यानि नानाहोभिः सगौरीवितानि नानाह्ना हि सन्तानार्थं गौरीवित मित्यथ पुरुषस्य नारायणा-यायन विश्वजितोऽभयोः पर्त्तसोः स्यादितरक एव पर्त्तसोः समाधिरिति यथासमाम्नायन्त्वेवैवं मवि-लोप इत्यथैतेषु दशसु विचारयन्ति कानीमान्यहानि स्युरिति ज्योतिष्टोम इत्येक एषो ऽविक्रांतः * पुर-

* 'एष विक्रीतः'—इति ख।

स्तात् भवन्त्यनापन्नान्येतानि पृष्ठानि ज्योतिष्टोम मित्यपरं पृष्ठं गृह्णमाणं महद्गृहीयादिति ॥ ८ ॥

अथैतत्क्षुल्लकतापश्चित मित्याचक्षते चत्वारो दैक्षा मासाश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामयनस्य प्रथमोत्तमौ पूर्वस्य पंचसोमासौ स्यातां तथान्तस्याऽथैतन्महातापश्चित मित्याचक्षते चत्वारो दैक्षाः संवत्सराश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामेवायनं चतुरुपेयु रपि वैतस्यैव पञ्चसो अभिवृद्धे स्यातां त्रयोविंशतिरयनमासाः पूर्वं पक्षसि युर्द्वाविंशति रुत्तरेऽपि वैतान्येव प्रथमानि चत्वारि समस्येद्यथा वौणि संवत्सर इत्यपि वा ज्योति- ष्टोमायन मेव कुर्वीरन्नेतेषां यन्मन्येरंस्तदपि वा यथा गणसंवत्सराणां तथा कल्पं कुर्वीताऽथै- तच्छौनकानाम् षड्त्रिंशत्संवत्सर तरसपुरोडाश मन्नसंरोधाद्यदन्तःपुरुषस्तदन्नदास्य देवतेति ते यस्मांसमया वा श्यामाकमया वीभे आपन्ने हविष्ट मित्यथैतानि महासत्राणि देवाना मेव दीर्घायुषो देवा इति मनुष्याणा मपि सिद्धानि स्युरित्यपरं बहवः सन्निविश्य सुनुयुः पुत्राः पौत्राः प्रपौत्रा इति तानि खल्वतिरात्राण्यविषुवत्कान्यूढायनानीमानि भवन्ति

तत्र यदतिरात्रं वा विषुवन्तं वा करिष्यंल्लुब्धो लोहो ऽभविष्यंस्तथापि न कल्पेनादेशो विज्ञायते नु ब्राह्मणानाथपिरव प्रराणं वेदयन्ते ऽथाप्याहैकविंशो ऽन्ततः स्तोमानां भवतीति शतसंवत्सरे ऽनतिरात्रस्यैव सत इत्यथैतदर्शनः सहस्रसाव्यं परमा विराज मुपकृत मपि वा सहस्रसंवत्सरेष्वा मेवोपकृतं स्यात्तन्नोक्त मयनेषु ॥ ८ ॥

स्वर्गकामः सत्र मुत्तरं तदंत्सारस्वत मेषा स्वर्गोक्ता भवतीत्यथैषा ऽग्नये कामायेष्टिः पृष्ठशमनीयेनैव भवत्यथ खल्वाह तस्या मश्ववाम्ब पुरीषीं च धेनुके दत्त्वेति केभ्यो दद्युरिति प्रसर्पकेभ्य इत्येके दृश्यते च प्रसर्पकेभ्यो दान मथापि व्रात्यस्तोमेष्वनृत्विग्भ्यो ददातीति पृथगेवैतरेतरस्मा इत्यपर कर्त्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति तत्रात्मनिर्वर्त्यमाने किमर्थो ऽवयवं प्रतीयादित्यवचनायां कृष्णा मुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतम एव मुत्क्रान्तसंस्थं कर्म भवत्यथापि शौ लनेकोक्ता भवतीति सारस्वते एवोत्तरे कुशलं यत्सन्ततस्तुत्ये त्रिवृत्पञ्चदश मिन्द्राग्न्योरयन मेताविन्द्राग्न्योर्भक्तौ इति यज्ञायुषी इन्द्रकुत्सौ सप्राये चापि चैता मभ्या-

मत्याधिस्त्रिवृत्पञ्चदशयोरिति त्रिकद्रुकक्लृप्त मुक्त-मस्यैतेऽयने दृष्ट इति यद् विश्वजिदभिजिताविन्द्र-कुक्षी सम्प्राये चापि ताभ्यां मत्याधिस्त्रिकद्रुकाणा मिति ॥ १० ॥

अथैतद् दार्षद्वतꣳ स्वर्गकामायनं तस्यैते पुरश्च-रणे गौपाल्यञ्चाग्नीध्मनञ्च दीक्षाभ्यः प्रति गौपाल्य मुपसद्भ्योऽग्नीध्मनꣳ स यदृत्विजो वाचार्यस्य वैतौ स्यातामिनौ गुरू तयोः प्रैषचरण मभिरूपं तदेव मनुष्येभ्यस्तिरो भवतीति तत एवारण्य माविशेन्न पुनर्ग्राम माव्रजेदिति स्वर्गं लोक माक्रमत इत्येके व्यावर्त्तते श्रेयान् भवतीति वा ऽथैतत्तौर मिष्ट्या-यनꣳ स्वर्गकामाय त मेवाभिरूप तदेव संवत्सरसु-त्यान्नेदीयस्या माचर्येप्सीत किमर्थं उ तदिति सायुज्यꣳ स्यादित्यनतुभूतिजꣳ स्यादिति सिद्धिदर्शी वा स्यात् सिध्यति वै खलु संवत्सरसुत्याया इष्टा-यनेनाग्निस्तत्रापि सुत्या देवता भवन्ति यावदेव मर्थरूपश्चादीक्षितः कृष्णाजिनं प्रति मुञ्चते नव-नीतेनाङ्गान्यभ्यङ्क्ते दीक्षारूप मेतद्भवति वाग्यतः इष्टय इष्ट्यन्त वा पश्वन्तं वा सोमान्तं वा कुर्वीते-त्युभयोः पृष्ठ्यमनरूप मेतद्भवति ॥ ११ ॥

सर्पसत्त्रे क्लिं मयनं स्यादिति गवामयनं स्तोम-विकृत इत्येके ऽनादिष्टान्यहानि व्यूहेन भवन्ति संव-त्सर आदिश्यंते तत्र किमर्थो ऽवयवं प्रतीयादित्य-थापि विषुवदादेशेन रोहप्रत्यवरोहौ गवामयनो त्पादविती भवतो ऽथापराह षण्डकुषण्डावाभिगरा-पगराविति वृते ऽभिगरापगरौ भवतः कौसुरुबिन्दे इति गौतम एते कल्पे ऽनादिष्टे भवतो यद्येतदना-देश इत्यादिष्टे कल्पे न * भवतो यद्येतद्विषुवता-देशेन रोहप्रत्यवरोहाविति दृश्यते विषुवानेतयो-रेतन्वयोऽहनि वास्तवतो ऽयने तथा रोहप्रत्यवरो-हाविति यद्येतत् षण्डकुषण्डादभिगरापगरावित्यन्यत्र सतो रवदिष्यदपि वेहोपासकयोरपि वा वचनाद-भिगरापगरौ स्याताः तत् खलु रूढप्रत्यवरूढं ततो विषुवानिति व्याख्यातानि सर्पसामानि विषु-वति सर्पसामानि कल्पसप्रयाणीति तेषां यदेव मानुपूर्व्यं निधनान्येषा मादित्यद्वेषा मुपक्रतानि तेषा मेव मानुपूर्व्य मथापरेषा मेतद्गर्गान्निधनं तत् त्रिणिधनानुग्रहाय माध्यन्दिने ऽचिकीर्षीदानुपूर्व्य मितरे ॥ १२ ॥

* ख-पुस्तके 'न'-इति पदं नास्ति।

अथैते गौषूक्ताश्वसूक्ते भाजाभाजयोः स्थाने सप्राये चापि वैनयोर्ज्योतिः सप्राये निधने यथा भाजाभाजयोरिति दशिनं स्तोमं करोति दंशुका: सर्पा इति द्वादशं विषुवन्त मित्याधित्सन्नथापि शश्वद् द्वादशौ विषसेचनौ नाम सर्पाणां दन्तौ भवतस्तद्रूपं विषुवत्यचिकीर्षीत् प्रजातिकामसत्र मुत्तरं तत्र संवत्सराभिप्रयोगो भवति संवत्सरं हि प्रजाः पशवोऽनु प्रजायन्त इति हि भवतीति तचैतान्येव चोथि समस्य निदधात्येव सा तृतीयं पृष्ठाःभिप्लवयोर्दशरात्रस्येति विकार उपपत्स्यत इति तचैके गवामयनन्तत: कुर्वन्ति प्रजातिकामसत्रत्वादेतेन वै सर्वः प्रजातिं भूमान मगच्छत् प्र जायन्ते बहवो भवन्तीति स्तोमतस्त्वेव गवामयनाज्जां रोहो भविष्यतीति यथैतत्प्रजापतेः सहस्रसंवत्सरं परमाधिराज मुपक्रत मपि वा प्रजापतीपसा मेवोपक्रतं स्यात्तत्र खलु त्रिवृतं करोति यथान्तरं लघुस्थायस्तोमस्थाद्ये प्रजापतिरिति ज्योतिष्टोमं तत्र माग्निष्टोमं संस्थां रथन्तरं पृष्ठं तत्र खलु बृहस्पतिसवं करोत्येषोऽग्निष्टोमस्त्रिवृत्स्तोमो रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो भवतीति न्यायकृप्तमुत्तरं न्यायकृप्तमुत्तरम् ॥ १३ ॥

इति निदानसूत्रे दशमः प्रपाठकः ॥ समाप्तोऽयं ग्रन्थः ॥

# ॥ उपग्रन्थसूत्रम् ॥

( सामवेदीयम् )

॥ ऋषि-प्रोक्तमिदम् ॥

आवसथश्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण सम्पादितम् ।

कलिकत्ता—सत्ययन्त्रत:

( १६—१, घोषेस् लेन )

श्रीहृषिव्रतचट्टोपाध्यायेन मुद्रयित्वा सम्पादकेन प्रकाशितम्

॥ शाका: १८१८ । संवत् १९५३ । खी० १८९७ ॥

# ॥ उपग्रन्थसूत्रम् ॥

## ॥ अथ प्रथमः प्रपाठकः ॥

॥ हरिः ॐ ॥

अथ सम्पत्तिर्विराजादेशे स्तोत्रीयानां प्रति विशेषः संख्या समस्ताख्ये प्रत्येकं मर्यादानियमो ज्योतिष्टोमे ऽथ तं मुख्ये त्रिपञ्चाशे द्वाचत्वारिंशानि स्वार्यतिरात्रे सवनानां भक्तिवाद्-च्छन्दस्तोमभक्त्यानदैवतैर्यानि सप्त चतुरुत्तराणीति गायत्री-जगत्यौ द्वे बृहत्या उष्णिक्त्रिष्टुभौ च द्वे पङ्क्त्यनुष्टुभौ सैव सप्तमी यैरुक्थ्यैश्च छन्दोभिरिति षष्टिस्त्रिष्टुभस्तासां त्रिवि-स्त्रयो विंशतिर्गायत्र्यः पञ्चचत्वारिंशतम् बृहत्यो द्वादश ककुभ-स्ततस्त्रिभिर्गायत्रीभिस्ता बृहत्यः स्युः सप्तपञ्चाशतं तावत्यक्षराणि गायत्र्यस्तैः स्तास्त्रिष्टुभस्त्रिवृन्मने पुरोजित्यां दशपद्यःपदान्य-नुष्टुप् शिरस्त्वाच्चर्य्यःप्रोत्यक्षरक्षोआयुषोः पूर्वस्यैकचत्वारिंशे परस्यैकान्नषष्ठे न्यूनातिरिक्ता सैनं सम्भानां विराजं सम्प-द्येते चत्वारि त्रिंशान्यतिरात्रयोरष्टादशायुषोभिका: पञ्च-द्विषष्ठान्यतिरात्रे गायत्री सम्पन्ने तासां त्रिविः ॥ १ ॥

द्वयं प्रकृत्या गायत्र्यः सप्त पञ्चाशतं बृहत्य स्ताः पञ्चाशीति-र्द्वादशाक्षरं च चतुर्नवति रुष्णिक् ककुभ स्ता नवशतं षोडशा-क्षरं च षड्त्रिष्टुब्जगत्यौ बृहत्यतिरिक्तेषु द्वादश सप्तोने नाम्न-धोरामया सार्धं मनुष्टुभस्ता द्वे षष्टिर्न्यूना चोष्णिक् ककुब्भ्यां

सोमापहरणं सोमाभिदहनं सोमातिपवनं क्रतुविलोप एव पञ्चम एतेषु हि पुनः श्रुतिराम्नातः संयुक्ता नु खलु पुनः श्रुतिर्विभ्रंशेत हि यस्मिन् क्षेत्र यज्ञक्रतौ विभ्रंशेत क्षेत्र तस्य प्रायश्चित्तिरिति हि भवतीति कियति कालात्यये विलोपो भवतीति यत्राग्निहोत्राहुतौ अन्योन्यस्याः स्थान मापद्येते यत्र दर्शपूर्णमासौ यत्र वापि क्रतू सुत्याहः परस्याह्नः स्थान मापद्येतैकाहो वा परमाहरित्याहुः रिति। तदु हैद ब्रूयुर्यौगिकश्च कर्तान्यस्य कर्मण स्थान मापद्येत विलोम एवैवं वादस्य स्यात्तदेव मतं वस्याविलोपानां सर्वदिति तत्र ब्रूयात् पूर्वपक्षादिस्थानस्या आवास्यस्यापरपक्षापादने विलोप मध्यर्थेव आमनन्त्यपरपक्षादिस्थानस्य पौर्णमासस्य पूर्वपक्षापादने हरादिस्थानायाः प्रातराहुते रात्र्यापादने रात्र्यादिस्थानायाः सायमाहुते रहरापादन एतेन मन्यन्ते ऽहरवरार्ध्यं वा कालात्यये विलोपो भवतीति नित्यं ज्यायस्यभिजानन् स्वयं न हरन्तरात् कालात्ययानेतदवरार्ध्यं विलोप माम्नासीदिति ॥ ७ ॥

यदि सत्राय दीक्षेरन्नथ सामुत्तिष्ठेत्सोम मपभज्य विश्वजिताऽतिरात्रेण यजेत सर्ववेदसेनेति भवति स खलु विश्वजिद कामादुत्तिष्ठतः स्यात्र त्वेनं समन्नियो बाधे ऽन्यत्र वा यज्ञो विलोपः स्यात्तत्र वैनन्दरूपो व्याधिः स्वभेदेनान्तः सत्रं प्रायश्चित्तं तवदुत्थाय विश्वजितातिरात्रेण यजेत कामापत्तिषु किं प्रायश्चित्तं विधीयत इति तदु यद् ब्रूयुः पश्यामो नापद्वि कामादुत्थानं यथा दशसु मासेषु गवां षट्सु वातवतः समद्मेघो नैमिषीयाणामित्यवेलयां वै खलु वा क्षपानां पद एवोदस्याविलोपानुपवादरूपं तस्य प्राप्य । मथ ये गावश्च नैमिषी-

याश्च वेलाया इत्यर्थः एकोदकस्यासन्न पयो ह्येव गावो बभूवुस्तथा नैमिशीया आसंस्तु खलु सर्वत्र प्रमाणं भवत्यथापि सिद्धिमेव गता मामनन्ति तथा नैमिशीयानां नवे खलु विलोपे सिद्धि मान्नास्यदिति तदु हवेद् ब्रूयुर्येऽस्य प्रजाया मध्याते स एतत् सत्रं समापयादिति विलोपानुवादरूपं ब्राह्मण मितुपपद्यते वा एतद्विलोप एवं ब्राह्मणं वेला हि यत् प्रजायै न्यायः सप्तपर्वा साधिष्यन्ति इति ते खल्वेते द्वे पर्वणी सत्रे यथा त्रिपर्वा ज्योतिष्टोमश्चतुष्पर्वाणि सारस्वतानि ताहृश मेतद्भवति ॥ ८ ॥

स खलु विश्वजिद्दीक्षाभ्यनुत्तिष्ठतः स्यादितोऽके सोमाप-भागेन जानीमोऽक्रीतो हि दीक्षासु सोमो भवतीत्यपि दीक्षाभ्य दुत्थाचार्याः सासुत्यान्नकारितो हि भवतीति यद्देतत्सोमाप-भागेन जानीम इति क्रीते सोमे संयुक्तो भवति नाक्रीते तद्यथा विश्वजिता धर्मा एकाहे ऽहःसंयुक्ता भवन्ति नाहर्गणेषु ताहृश मेतद्भवति तत्र कथं सोमक्रय इति न विद्यत इतोऽके विश्वजिति चेद् हिः क्रेतव्यो भविष्यत् किमर्थः सोमापभाग मान्नास्यदित्य-थापि सोमसंस्कारार्थः सोमक्रयो भवति सोऽयं पुरस्तादेव संस्कृतो भवतीति कलङ्कलोपो ऽक्रीयमाणे सोम इत्याचार्याः क्रेतव्य एवेत्यथाप्याह सर्वस्मा एव दीक्षते सर्वं माप्नोतीति स चेऽन्या-दीक्षोपसद आमनन्त्यथान्यं सोमं न क्रीणीयादग्राघातरूपोऽन्यस्मिन् सुक्रीते सात्विकं सोम अपि सृजेयुर्यद्देतत्किमर्थः सोमापभाग मान्नास्यदिति सत्रसमाप्ति मेतेनोपाप्नुम इत्यत एवं पश्यामः सायस्केषु सद्यस्कृते सत्याख्ये दास्तं यत्रापि सर्गात् सद्यस्त्व माम्नायमानं ताहृश मेतद्भवति यदि चापि सोमसंस्कारार्थः सोमक्रयो ऽभविष्यत् क्रीते सोमेऽपकृतेऽर्थः पुनः क्रेतव्यो ऽभविष्य-

युर्यावतीभिरुतिष्ठेयुरिति हि भवतीति कल्पानां स्तोत्रीयाणा मधिकारो भवति न स्तोत्रीयेतराणां मित्यर्थाक् एतच्च स्व-जपिता स्वच्छिद्रासु ऋध्येरं स्वेरेव ताभिः स्तोत्रीयाभिरिति मन्त्रो व्यवायो हि स्तोत्राङ्गैः स्तोत्रस्य न्याय्यन्तरो यथा चेत् स्तोत्रीयालोपोऽथाप्येवं सत्युत्तरं स्तोत्रं यथाप्रकृति भवत्यथे-तरयोर्भे एवायमप्रकृते भवतस्तावतीभिर्वातिष्ठेयुर्भूयोऽन्तरभि र्वेति सच्छन्दस्या अधिकृता मन्त्रा एव मिव च ह्येतस्य वाक्यस्यार्थो भवत्ययने तत्र प्राकृताच्छन्दोयोगाद्भवति तदाथा स्वारयौडयोः क्रियमाणयोर्नैवाक्षरसामान्यात्साम्य मुपपद्यते न छन्दःसामान्यात्साम्य ताद्वय मेतद्भवति समानस्तोत्रे चेन्न स्तोत्रीयाविपर्यासः स्यात् अतः सं गणयितव्य आनुपूर्व्यार्थं न ह्यभ्यावर्त्तमाने स्तोमातिरेकः स्यान्न चानुपूर्व्यं न व्यवाप्येत तत्र सर्वप्रायश्चित्त मेव स्यात् ॥ ११ ॥

तं चेदस्तुते गायत्रेण संहितस्यैकस्यां स्तोत्रीयायां स्तुतायां ऋध्येरंस्तत्समापयेयुरेव संहित मिति मन्त्रास्ते स्तोत्र-सम्बद्धानि हि नाना सामानि पवमानेषु भवन्त्यवान्तरसम्बन्धस्तु वस्यं साम वाह्यतर इ खलु सम्बन्धो व्याहन्तव्यतरो यथा वेद-वान्तरसम्बन्धोऽथाप्येतदथा ऋचे संहितं पुनः प्रयोगे भवति तच्चरचे साम् विद्यात इति तदु चेद् ब्रूयुरथ वै गायत्रस्य च सन्नि-पातः स्यात्कृत्स्न च तच्चामि स्यादिति विद्यते जामिकल्प इत्या-हुस्तेषु च गर्भेषु च तदाहियते तदेव संशये प्रत्येतव्य मित्यथ यत्किंस्तोत्रे द्रव्य मनुवियते चेत्समस्ताः सुवीरन च तेना-तिष्ठेत मन्त्रे स नित्यानां साथ द्रव्याणा मधिकारो भवति ना-नित्यानां न ह्यनित्यानां लोपे प्रायश्चित्त मा भवतीति ब्रूयाद-

प्यपि यः सर्वेषां द्रव्याणा मधिकारं मन्येत सर्वेषा मपि स्त्री-णामा मधिकारं मन्येत तस्यैवं नावीस्तवातिहवी स्याता मथ खलु विद्वांसोमं संसुनुयाद्दित्येके कामापत्तिषु हि प्रायश्चित्त विधीयत इति नाविदुषां संसव उपपद्यत इत्यौडाहमानिर्न हि ज्ञानाविषये संसवः स्याद् दौर्बल्यादध्वनो विद्वांस्त्वेव संसुनुयाद् यत्रासंस्तु सुन्वन्यज्ञात्यया च्छडेत यदेतदकामप्राप्तौ प्रायश्चित्त मिति पश्यामो न कामापत्तौ प्रायश्चित्तं यथाहिताग्नेः प्रवासका मिष्टिं तादृश मेतद्भवति ॥ १२ ॥

मद्दति रात्रेः पूर्वतरमनुवाक मुपाकुर्यात् पूर्वो वाचं पूर्वश्छन्दांसि पूर्वो देवता वृङ्क्ते पूर्वोऽभिषुणुयुरिति तां न पूर्वचिकीर्षा मनेरतैवं पूर्वकल्पस्त्वेवैष भवति यदि पूर्वचिकीर्षा भविष्यत् पूर्वं प्रातरनुवाक मुपाकुर्यु रित्यभविष्यत्तु कालनियोगात् प्रातरनुवाकस्य जानीमो न पूर्वकरणात् पूर्ववादा भवन्तीति यद्यपि पूर्वकरण मुक्त मनेरताशक्यमाने स पूर्वकरणेन प्रायश्चित्तं कुर्यात् परेषां हि देवतासु परिगृहीतासु देवतापरिगृहीतार्थं प्रतिजानानः कस्मात् कुर्यात्तदन्वह मेहर्गणेषु स्यादित्येके हरयेतसंसूयेतेति कृत्वा रात्रेवेत्यौडाहमानिस्तच्छायन्तीयेनैव व्याख्यातं तत्र व्यूढेष्वहःसु स्वस्तिष्टुब्जगतीरेव वृषण्वतीः कुर्यादेवं प्रायश्चित्तं च कृतं भवति व्यूहश्चानुगृह्यत इति नियुक्ता वा आग्नेयकल्पेन वृषण्वत्यो भवन्तीति चेज्ज्योतिष्टोमे ता नियुक्ता भवन्तीति ब्रूयात् तद् यथा सर्वाणि प्रायश्चित्तानि ज्योतिष्टोम आम्नायमानानि सर्वक्रतूणि प्रतियन्त्येव मप्ये तद्वृषण्वद्रूपं ज्योतिष्टोमेषु नियुक्तं सत्सर्वक्रतुगमक्रतोमोऽथापि य एताः सर्वक्रतुगा मनोता षष्ठे दाशरात्रिके ऽविकृतदृष्टाहरिति सप्तांश्येह बहिष्पवमाने चाभवे दाग

पुनः समानाह्नि स्तोत्रीयाध्वारो विद्यते ऽन्यत्र विद्यमानात्त-
देतन्नोपपद्यते यदि ह्येना ज्योतिष्टोमे नियुक्ता मन्येत सर्वत्रैवैना
नियुक्ता मन्येत न ह्येतदुपपद्यते समानत्वादेवास्यान्येषु क्रतुषु
नियोगो भविष्यत्यन्येषु प्रथव इति यद्यु वै ज्योतिष्टोमेऽपि प्रथवं
प्रतीयादन्येषां यथादेशानां प्रथवम्प्रतीयाद् यथा स्वाराणा मति-
छ्वे नौधाना मर्वाक्सूवे वैष्णवीयानां मनुष्टुभां कलप्रदरणे
यामानां स्तोत्रकल्पत्तु मिति ब्रुवन्नार्षेयकल्प मभिक्रियामन्त्रेति ब्रुवं-
स्तद्वर्ग व्याहन्यात् कस्मादन प्रायश्चित्तेन व्यूढो व्याहन्यं ताथे-
षस्तीहति प्रतिपद मेव व्रषण्वतीं कुर्यादसच्छ्रायाय निकल्पा ह्येवैष
भवति प्रतिपदा व्रषण्वती कार्या सवनमुखेषु चेति सवनमुखेषु
चेति ॥ १२ ॥

॥ इति उपग्रन्थसूत्रे प्रथमः प्रपाठकः ॥

---

## ॥ अथ द्वितीयः प्रपाठकः ॥

॥ हरिः ॐ ॥

यदि सोम मक्रीत मपहरेयुरन्यः क्रेतव्यं इत्येतावदेतद्भ-
वति तत्र न प्रायश्चित्त विद्यते दीक्षित आगमयेतासोम-
लाभादपि गिरिस्थावेयुरित्यपि शाण्डायनिब्राह्मणं यदि क्रीतं
यो ऽनेशा ऽभ्यासन्न स्यात्स स्याहृत्यो न दूरादाहृत्यो न ह्युपसदां
विकर्षो विद्यत इतीवार्थो भवति स खल्वो समा दाध्यायनकाला
दागमयितव्य इति मतान्ने व्रत्याभिषवो हि आयान् भव-

त्याख्यायमानानां यथास्थानकरणादिति तद् यद्येतत्प्रत्यक्षोऽधिगम्येत यदि परोक्षो नैवैनं पुनः क्रीणीयात् पूर्वस्यैव हि स क्रयणक्रीतो भवति सोमविक्रयिणे तु किञ्चिद्दद्यान्न पुनः क्रेतव्य इति वार्थो भवति क्रयाय तु किञ्चिद्देय मिति ग्राह्यायनिब्राह्मणं तच्चेद् यजुष्कृते परोक्षे प्रत्यक्षोऽधिगम्येत परोक्षेणैव वर्त्तेयेयुरिति मन्यन्ते न हि यजुष्कृतस्यापघातो विद्यत इति प्रत्यक्षालाभादेव हविषः परोक्षो भवतीत्यपरं प्रत्यक्ष मेव प्रयुञ्जीरन्नित्यथाध्यनग्राय यो यत्संवत्सरं वा परोक्षेणैव वर्त्तयेयुरिति यद्येतन्न यजुष्कृतस्यापघातो विद्यत इति पश्यामो यजुष्कृतानां मात्राव्यापादाद्धविष्यानाम्नायमानानात् पञ्चशारदीये यथा ते मात्राव्यापादीद्धविष्या अवन्त्ये व मपि प्रत्यक्षे ऽधिगते ऽद्धविषः परोक्षो भवतीति स खल्वधिगमनं तदेव प्रत्यक्षं प्रयुञ्जीतानभिषुतश्चेत् परोक्षः स्याद् यद्यु वा अभिषुत उत्तरस्मिन्नभिषवकालेऽभिषुणुयु रथ परोक्ष मपो वाभ्यवहरेयुः सकृदेव वा सर्व मभिषुणुयुः तच्चेदनभिषुते परोक्षे प्रत्यक्षोऽधिगम्येत तत्र सर्वप्रायश्चित्त मेव स्यात् ॥ १०॥

सन्निपाते हौतरदीक्षात भवति क्रीतस्य चापहरणे परीक्षाभिषवे च तत्र विप्रयोगे कल्प मथ खलु सत्रेभ्यापियात् पाञ्चदक्षिणं साम प्रायश्चित्तं तु क्रियेतेत्येके तद्यदेतदहीनैकाहानां सन्नाख्यापद्यमानानां दक्षिणा अपयन्ति ताभ्यो नेतद्भवति न तु प्रायश्चित्तानां मङ्गावलोपेन वृत्तिं पश्यामः कल्पानि ह्येव त मर्थं साधयन्ति तद्यथा दग्धप्रायश्चित्ती मूर्ध्वं ब्रह्मसाम्नोऽतीतकालं ब्रुवते ब्रह्मसामात्यया देव मपि पाञ्चदक्षिण्यस्यासिद्धेः सामैयोगोऽपि नैं सिध्ये तत्र सर्वप्रायश्चित्त मेव स्यात्तच्चेत् तृतीय

सवनात् सोम मपहरेयु रामाध्यन्दिनात् सवना॰ दुपनिहत्य माध्यन्दिने सवने ऽभिषुणुयुरिति मन्यन्ते न हि तृतीयसवने सोमसंस्कारो विद्यत इति तदेतन्नोपपद्यते यदि ह्येन मापदो हेतो रसंस्कृतं पुरस्ता माध्यन्दिने सवने ऽभिषोतव्य मन्येताथेम मापदो हेतोस्तृतीयसवन एवाभिषोतव्यं मन्येत न च हि साधु ज्ञातस्योपनिहन्तिर्विद्यते ऽपि च तृतीयसवने तैत्तिरीयाः सोमा- भिषवं मामनन्ति पयो वा हिरण्योदकं वा प्रतिनिदध्यादित्यपर मेतौ ह्यनभिषवकाले सोमप्रतिनिधी भवत इति यदि तु पूत- भृतिसोमसंस्कारो विद्येतार्थेतदेवं स्याद् यद्यु वै पूतभृदपि हृतः स्यादन्य मेवाभिषुणुयुर्न ह्यविद्यमाने सोमातत्त्वने पयसि वा हिरण्योदके वा सोमत्व मुपपद्यत इति ॥ २ ॥

यदि कलशो दीर्येतेति भवति त मेके पूतभृदाधवनीययो- रधिकारं मन्यन्ते कलश इत्यात्मा सर्वेषां सोमधाराणां कतर मनुकतमं मनोमहीत्यनियुक्तं तु पूतभृदाधवनीययोः कलशत्वं कुम्भाविति हि वयं मधीमहे ऽथापि पश्यामो द्रोणकलश मेवा- भिक्षतं ह्यस्य कलशः उपदस्यतीत्येतेन वचनेन पूतभृदाधवनी- ययो र्दीर्णयो रुपसदनं विद्यते यावान् ह्येतयोः सोमो भवति बहुरेव तावान् भवति. तद्यदेव कलशो दीर्णः सिक्त तदिदं प्रायश्चित्तं कृत्वा नैवादीर्णा सिच्यमानेनोप वा सिक्ते दीर्णे ऽथ सोमातिरेकात् स्तोत्रोपजनः सवनसंख्यासाम्याद्वो भवत्यग्नि- ष्टोमातिरात्रयोश्च तत्स्वर्थसामान्यादितरास्वपि संस्थासु प्रतीमः स खलु नाविद्यमानां संस्थां प्रणयेत्तस्य तस्य कर्तो ज्योति- ष्टोमं त्वधिकृत्य प्रायश्चित्तान्याम्नायन्ते तस्मादग्न ज्योतिष्टोमोः [illegible] ,मनुष्यानमीति [illegible] वेद मतो: प्रवृत्तो प्रवृत्ता:

संख्याया अतिरिच्येत द्वितीयां वा संख्यां प्रथयेदेकस्तोत्रं वोपदध्यात् ॥ ३ ॥

तच्चेदुक्थसंख्या ऽतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितं चतुर्थं मुक्थं कुर्यादक्रतं चेदहःकल्पे स्यादथ चेत् क्रतं मच्छावाकसामजातीय मेव शिपिविष्टवतीषु कुर्यात्तच्चेत् षोडशिसंख्यातिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितं द्वितीयं षोडशिसाम कुर्यादक्रतं चेदहःकल्पे स्यादथ चेत् क्रतं षोडशिसामजातीय मेव शिपिविष्टवतीषु कुर्यादथ वाजपेये क्रत मेव गौरीवितं भवति क्रतौ शिपिविष्टवत्यस्तच्चेदन्याभिष्टुभः शिपिविष्टवत्योऽधिगम्येरंस्तासु बृहन्निधनं वाकजम्भं कुर्यात् काण्वं बृहद्वा यद्वा वेन्न त्रिष्टुभोऽप्यन्यच्छन्दस्याः शिपिविष्टवत्यस्ते व यद्वा न शिपिविष्टवत्योऽपि वैष्णव्य एवा न्वैवात्र देवता प्रयुज्यते तच्चेद् बृहत्सन्धिषाम्णोऽतिरात्रादतिरिच्येत विष्णोः शिपिविष्टवतीषु रथन्तरं द्वितीयं सन्धिषाम कुर्याद्वा द्वितीयं सन्धिषाम क्रियमाणं कि मन्यद्रथन्तरादेव प्रतीयामोऽथामोर्यांगिरा गौरीवित मेव शिपिविष्टवतीषु कुर्यात्तिस्रो ह्य तिरोरात्रां णस्योपसचार उपसद्वाः ॥ ४ ॥

नैदिष्ठिनि दीक्षिते प्रेतस्यैव पूर्वपुरुषैः सह मामाग्निष्टोमीयुः संवत्सरेऽस्थीनि याजयेयुरिति भवति त मेव उभयोः प्रेतकल्पयोर्मन्यन्ते ऽन्वयस्थाने ह्याम्नाता भवन्त्यरस्यै वेत्यमन मेतदयुक्त्युरिति हि पूर्वं कल्प मपहन्योत्तरेण संयुज्याम्नातो भवति स खलु संवत्सरे ज्रियन्तो भवति यद्वा हैनं चिन्वः कुर्युः सर्वान्तांस्तत्सरं गणयेयुर्यद्वा नैदिष्ठी प्रायश्चित्ता इव प्रायश्चित्तानतरेणीस्थियाजनं च प्रेताग्ने दीप्येरन्त स्वैतुषदन्ति

होमꣳ हूयेत न दर्शपूर्णमासाभ्या मिज्येत प्राणावभृथे ह्येषोऽग्नि-
होत्राहुत्योश्च दर्शपूर्णमासयोश्च सम्बन्धस्तस्मात् प्रेते नार्थोऽतो न
याज्या न प्राणावभृथा भवन्ति तस्मात्ते प्रेता अपि समापयि-
तव्या असम्मितꣳ स्तोमꣳ स्यादिति भवति तत्रैकेऽसमीक्ष्य स्तोम-
स्यैकान्त्यꣳ सुत्यौरं नित्यसम्मितं प्रतियन्त्युपपद्यते च ज्याय-
यस्त्वं कनीयस्त्वं च स्तोमाना मपि प्रेत्यासम्मितं ब्रूयादेव
मसम्मितं भवतीति न त्वेवं पर्यायधर्म आराध्यते नविष्टावधर्मो
न ज्योतिष्टोमानि च तत्सामान्यूर्ध्वं वै त्रिवृतो याथाकामो
स्तोमानाꣳ स्यादित्यपर मेव मेतत्सर्व माराध्यत इति तत्र त्रिवृतः
स्थाने दशप्रभृतीनां याथाकामो स्यात् षोडशप्रभृतीनां पञ्च-
दशस्याष्टादशप्रभृतीनाꣳ सप्तदशस्य द्वाविंशप्रभृतीना मेक-
विंशस्येति ॥ ५ ॥

कलशे उपदस्ते हिरण्य मेवापोऽभ्यवनयेद्धिरण्य मभ्युन्नये-
दिति भवति द्रोणकलशे हिरण्य मवधाय तत्रापोऽभ्यवनयेयु-
र्हिरण्य मेव चमसेष्ववधाय तेष्वपोऽभ्युन्नयेयुः प्राणा वा आपो-
ऽमृतꣳ हिरण्य ममृत एवास्य प्राणान्दधाति स सर्व मायुरेतीति
भवति नाराशꣳस उपदस्यते तत्रापु अवनयेदित्यस्य अवनये-
दित्यर्थं मन्यन्तेऽमु मिति हि भक्षदक्षिणाना प्रत्यक्ष माचक्षते यदि
पीतापीतो सोमो संसृज्येयाता मिति हुताहुता विभ्यर्थं मन्यन्ते
न भक्षिताभक्षितो न च प्रच्छिष्टहोमो विद्यत उपपद्यते च हुता-
हुतयोरिव पीतापीतत्वे हुते ह्येवाभक्षिते पीतवन्मन्त्रवर्णा भवन्ति
यदेवेन्द्रपीतस्यत इन्द्रियावत इत्यत्र खल्वदृष्टभक्षीनाजानꣳ-
छन्दो नादिष्यति तद्यस्य छन्दसः कालः स्यात्तच्छन्दसा भक्षयेयु-
रिति मन्यन्ते तदेतन्नोपपद्यते यद्येव मभविष्यत्तच्छन्दस इति

वाग्वास्यदृच्छन्दस इति वा यथामुथरीत्यायेत्वंनाजानन्न राजान मामनत्वथापि विकृतो भवति तद्यथाग्निविकार एव सप्यग्निम्न च्छन्दस्त्वाविकारोऽथापि चेदनाजानऽञ्छन्दो नाद्रेत्यदिदं पीतता मपि नाट्रेत्येव लिन्दविन्द्रपीतस्येत्याहैते न मन्त्रो प्रस्थित मधिकृत्यामनन्तीति प्रस्थित मु चेज्ञानन्निलैवच्छन्दो भाद्रिवत्यच्छन्दस्त्वादेव भक्षस्य यस्यो हेवोः प्रस्थित मधिकृत्या-मनत्यन्वयस्यान आम्नातं सर्वस्तोत्रेषु प्रत्येष्यतीति ॥ १ ॥

तत्र नाराशंसानां मिन्दुरिन्द् मवागात्तस्य ते देवतः पितृभिर्भक्षितस्येति प्रातःसवने समानं पर मोर्वैः काव्यैरिति परयोः सवनयो रथ षोडशिन इन्दु मवागात्तस्य ऐन्द्रं सहोसक्षीति समानं पर मथ सन्धिभक्ष इन्दुरिन्दु मवागात्तस्य त इष्टयजुषस्तो देवसोमस्तुतः स्तोमस्येति समानं पर मथ खल्वाज्येनाभ्युपाकृतस्य जुहुयादिति भवति यत्र सदसोऽनिष्टं तं नाराशंसं स्तोत्रेणाभ्युपाकुर्य्युस्तदिदं प्रायश्चित्तं कृत्य किमु खलु होतव्य मिति सोम इत्येक आजीरनाभ्युपाकृतस्य जुहुयादिति स्वाजीरन्नभ्युपाकृते प्रायश्चित्तं जुहुयादित्यभविष्यन्न चेत्सोमाहुतिरभविष्यदनाचारस्तन्नोभ्रेये सोमाहुतीनां न चोच्छिष्टहोमैश्चिद्यतेऽथापि वषट्कारप्रदानैः सोमो भवति न च सोमः सोमदेवतो विद्यतेऽथाप्याजीरनाभ्युपाकृतस्य जुहुयादितुमन्ये च मन्त्राद्याहुतेरेव प्रतीयामितिं तदु चेद ब्रूयु राजीरन स्तोत्रेणेति वा वितुस्याथो भवत्यत्र हि प्रथम मभ्युपाकरणाद्वयं भवति यदा अशक्य सर्वं मधिकृत्याम्नातु तदन्वयस्यान प्रामनन्तीति ब्रूयादथेद स्तोत्राण्यधिकृत्याम्नातं भवत्यथाप्येति कात्यायनीयानामध्ययूनां स्मृतिर्भवति यस्य चमसोऽभ्युपाकृतः स्यात् एन

मुत्तरसदसि प्रावस्थाप्य पूर्वया द्वारा सदसोपनिहृत्य पुरस्ता दाग्नीध्रीयस्य निधायाज्यं जुहुयादिति यद्वै तदाज्येनाभुग्नाकृतस्य जुहुयादिति प्राजेरनाभुग्नपाकृते प्रायश्चित्तं जुहुयादिति वा एतदुपपद्यते ॥ ७ ॥

सोमेऽभिदग्धे सोमभक्षमन्यभिषुणुयुरित्यध्वर्युब्राह्मण मन्याभि रोषधिभि रभिसंसृजेतेति प्राच्यायनिब्राह्मण मौदुम्बर्यां भग्नायामहृतो वृक्षात्तद्वर्णरूढाया मन्या माहृत्य तथैवाहृतोच्छ्रित्यो-च्छ्रितास्वग्नीध्रीयं गत्वा महाव्याहृतिभिर्जुहुयादथ खलु न बहिरवभृथं यूपविरोहणे श्रेषं मन्येतापि न कलशदरणे ग्रावापिधौरणे महा-वीरभेदन इति बहिरवभृथं श्रेषं प्रतीयाद्य इहैवं मन्येताथ यत्र विप्रुषिद्वप्रायश्चि... श्रेषाः पूर्वापरे युगपत्सन्निपातेयुर्यथा श्रावदक्षिणस्योत्तरयोरवच्छेदयोः सन्निपातेऽसिद्धिप्रतिषिद्धानि सर्वोत्तराणि प्रायश्चित्तानीति विद्या दथ चेत् सर्वे युगपद्विच्छिद्ये-रन्नसिद्धिप्रतिषिद्धान्येव तत्रोत्तराणि प्रायश्चित्तानीति विद्या दथ चेदनेको ग्रावापि शीर्येत पूर्वस्मिन्वाभिषवेऽपि चोभयोरुभयोर्वा सवनयोः प्रतिहर्तावच्छिद्येत यूपैकादशिन्यां वानेको यूपो विरो-हेद्विभवेत् स्वित्तत्र सकृत्कृतं प्रायश्चित्तं विभवेदिति ब्रूयादेका प्येव स्तोत्रीया होतृमाताऽतिष्ठयमाना स्वारं वा जनयति चौडं वाथ बहुषु सकृत् कृत मेव विभवेदित्येतमनुरामहे बहूनपि समानजातीयश्रेषात् सकृत् कृत मेवं विभवेदित्येतेन ब्राह्मणः प्रायश्चित्तं व्याख्यातं सकृत् कृत मेव विभवेदिति तत्र ग्रावाहुनयो महावीराभिमर्शनं च तद् ब्रह्मा कुर्यात् प्रायश्चित्तिरनुज्ञाता वा प्रकरणादध्वर्युकर्म त्वेवैतन्मन्यन्ते एष च हि श्रुतिस्मामा माङ्गलीनं होता महावीरेषु भवत्यपि नोपातुमनुसंधाय

वैमाहुतिर्विद्यते, न ब्रह्मणो नो मंहगौरवराविम भवत इति भवत इति ॥ ८ ॥

पृष्ठाना मनुकल्पः प्रथमे हनि रथन्तरयोन्ये त्रिणिधनमध्ये निधनयोः स्थाने तृचस्ये स्यातां प्रतिष्ठेवोहगीतिपृष्ठरहस्या-पूचित तस्माद् बृहद्रथन्तरे एकर्चे न कुर्वन्तीत्येडक्रावमत्य मैधातम्। वैखानसं वेडानुग्रहदृष्टान्तात् स्तोमासंभवाद्विहलभिदेकनिक-दर्शनेर्नित्येर्वा सहैकर्चाः यज्ञगीवमध्यो वा बृहत्यां साम तृचो नित्ये अन्तरानुष्टुभि पृष्ठोदर्के हो प्रथमायाः सर्व एकर्चास्त्रिणि-धनमध्ये निधनानुग्रहवृत्तेः, स्वारान्तं, नरायद्दष्टे वैखानसो-हगीतिरेवं प्रायणीये त्रिवृति स्थाने च तृचेषु पराणि स्तोम-सम्भवोद्गीत्यादिभिरागन्तूनि, प्रत्यहं दैवश्रवसमेधातिथपूर्वा-भीशवेहारायणकौलमलबर्हिषाणि हवहामदेव्ये सयासोमीयं व्यूढि-मांगीयवं निधनवच्चेद्रानुष्टुभानानुरूपाग्निष्टोमसाम्न श्चोहो-निके स्वारे द्वितीयपञ्चमयोः शुद्धाशुद्धीसए, समूढे प्राहृषाभि-निधनवद्वे दागन्तु संयोगेनेकर्चानित्यानुग्रहस्तोमोपपत्तेस्तृचा कार्यो जामिस्थानपृष्ठान्वयप्रतिदर्शनैरागन्तु पृष्ठ थान्ते परि-स्वामायां च प्रीणव्याद्धिति विषाक्तो—चेदेडं चेद्यन्य प्राग् द्वाभ्यां निधनवन्नेत् पृष्ठं तृतीये बृहत्यां माध्याद् विपरीते पञ्चमि-चाव्येत्यतिकल्प्य, नरायस्य मागन्तु स्तोये ऽष्टमे प्रव्येवागन्तु बृहतीषष्ठे गौरीविताद्विपरीते व्यूढे ॥ ८ ॥

द्वितीयस्यामेवे गायत्र मेकस्या मर्वादनुष्टुभा वापसंक्रमोऽ-भिवेचनीयवत्तथोत्तरयोर्जामि चेद्यन्ते नेत्यनयोर्मध्ये विपरीते व्यत्यास मेकर्चस्तृच इति चतुर्थे वा ककुबादंयत्वात्र्येकर्चा-स्तृचामानीतरत्र्य षष्ठे विपृष्ठाभिमानितत्वात् पुरस्तादुपरिष्टा-

दित्युभयोः स्यादुपाङ्गपृष्ठान्याहार्य्यपृष्ठयोश्चैवं प्राक्वादिषु हिसा-
मत्वाच्छन्दस्य वारवन्तीयं स्यादुभयोः पवमानानुकल्पः पृष्ठानु-
पूर्व्येण स्तोत्रीयानामाब्रवदा प्रत्यक्षपरोक्षाभ्यां सामानादेशा-
च्चोभे पावमानिके रेवतीसंयोगाद्वारवन्तीयेन प्रत्यक्षार्थे दाढ़े-
कुरुते न परोक्षार्थं प्रत्यक्षाणीति प्रकृतिपृष्ठत्परोक्षाणीत्युभयतः
पारोक्ष्यात् प्रत्यक्षपरोक्षकालसर्गाद्विभिर्दर्शनाच्चैकत्वे वा प्रत्यक्षेषु
विष्टुतीनां छन्दोधिकारत्वादुभयेषां च दर्शनात् तु पञ्चमे
भेदान्न हि महाभाक्तोष्वन्यदभीवर्त्तकालेयानुकल्पइति चेतो-
भयासम्भवाद्नूवष्कारत्वाच्च स्यात्तु विकल्पनियमात् सम्भवस्य
प्रथमेऽहनि रथन्तराभीवर्त्तयोर्वाजयानि सामत्वेनाज्यामि-
त्यत्वाद् गर्भिवत् रु... वैकर्चाः पञ्चदश्यां पञ्चगौङ्गवाभ्या
व्यवधाय त्रीन् प्रथमाया मेव द्वितीये तदादिवार्हताच्चादभी-
वर्त्तकालेये यथाजाति षष्ठे तु हर्षे चेत्सामत्वस्ततोऽभिविध-
न्वत् पृष्ठं तृतीयपञ्चमयोर्गायत्र मेकस्यां द्वितीयपञ्चमयोर्द्वि-
तीयतृतीययोः ॥ १० ॥

विश्वजिति प्रमाताः पृष्ठदेशास्तेषु तस्य तस्य प्रकृतस्य
पृष्ठान्यनुकल्पयेद् यथाशक्ति न पावमानिकानि पृष्ठव्यपदेशाः
स्युः सुपुराभावाद्विश्वजिति प्राप्तस्य पृष्ठदर्शनादुभयसामानराय-
त्वाच्चोक्त आवापसंक्रमो जाम्यन्त्तिनापदेशानि गायत्रीत्रष्टुत्यो-
र्येष्वोक्त मजामिक्रमेण विश्वजितोऽव दर्शनात् सिमास्विष्टप्चस्यैव
मेवाभवे यज्ञायज्ञीयं न्याय्यानि च हविष्पाङ्गपृष्ठान्याहार्य-
पृष्ठयोश्चैवं प्रत्यक्षाणाए स्थाने परोक्षाणि वृहद्रथन्तरपुरस्ता-
दुपरिष्टाज्ज्योतिष्टोमीयस्तरां जराबोधीयान्तः सामत्वं एव मेका-
नानुकल्पे रथन्तरवृहतोर्मैत्रातिथ्यमंध्यः सामत्वान्न प्रकृत मेव

यामणोः क्रमान्नादिति षड्हे यस्तेनातिदेशाच्छन्दसे विश्वजि-
त्यव्यपदेशानुसञ्चाराच्चानुग्रहीत बृहद्रथन्तरे इष्यन्ते चोभय-
सामतन्त्रे सर्वपृष्ठं यथासोर्यामपि तत्र चेद् गुणात् सम्म-
तेन ॥ १२ ॥

कन्दोमवत्स्तोमयोरनुकल्पः पृष्ठातिदेशा एकविंशत्वहेना-
र्थात् प्रतिषेधाच्च नीसूराणि तत्पृष्ठे तदाख्यत्वाद्ब्राह्मणैक-
सामान्याद्यत्वात सञ्चारार्थानुग्रहाणि द्विविदुतत्येतरपवीत-
वत् स्युस्तु हादशपृष्ठदर्शनात्पुरस्ताज्ज्योतिर्ब्रह्मसाम्नि च पृष्ठदर्श-
नाच्चौभपुरोऽहितयज्ञोस्तनूपृष्ठ इति ] प्राधान्यादेकसामान्या-
यत्वादिति बहूनि गर्भेषु वचसंस्कारार्थे सधर्माणि विष्टुत्य
नुपपत्तेर्महावैष्टम्भं भवावापेष्वितराणि स्युः सुन्तृचस्य स्तोत्रौ-
यांख्यानसंक्रमकुलार्यिनो चतुष्टोमाग्निस्तोमसामदर्शनाद्विष्टुत्य
श्रवने च विष्टुतुपपत्तेः सप्तदशवर्जिहिंकाराः कुशादिधानं च
तस्य प्रयोगः पञ्चभ्यो हिङ्कृत्य महावैष्टम्भन्तिसृषु रेवत्य एतस्यां
रथन्तर मेकस्यां पञ्चभ्यो हिङ्कृत्य शक्वरीभिर्मध्यमः पर्य्यायः
सप्तभ्यो हिङ्कृत्य वैराज मेकस्यां वैरूपन्तिसृषु बृहत्तिसृष्वपि वा
सर्वेषां महावैष्टम्भमेव प्रथमो विष्टावो वैराजं मध्यम उत्तमो
वैराजं मध्यम उत्तमः ॥ १३ ॥

॥ इति उपग्रन्थसूत्रे द्वितीयः प्रपाठकः ॥

——————— १.

## ॥ अथ तृतीयः प्रपाठकः ॥

---

॥ हरिः ॐ ॥

अथ खलु वैश्यस्य वर्णकल्पे काकुभमुत्तर्यं कण्वरथन्तरस्य सम्पं-दद्दिह विद्याद्वैश्यस्य स्तोमे हि सर्वं बृहतीषु भवत्यथ यज्ञायज्ञी-यानुरूपे बहिष्पवमाने त्रिहिङ्कुर्युर्नानासामत्वात् सकृदित्यपरं हिङ्कृत्य विकारात्सम्पदुपपत्तिर्थ्यद्बहिष्पवमानं सकृद्धिङ्कृताभिः पराचीभिः स्तुवन्तीति नोपपद्यते च हिङ्कारस्तस्या विशेषात् साम्नि साम्न इति चेन्न विशेषश्रुतेस्तस्य रथन्तरबृहत्पृष्ठं नौधसः श्यैतं ब्रह्मसामेति षोडशसाम्नि भवति तत्र खल्वाचार्याः षड्-चैषी गायन्ति रथन्तरस्य पूर्वं देशं बृहत उत्तरं रथन्तरस्तोत्रीये नौधसस्य पूर्वं देशं श्यैतस्योत्तरं नौधसस्य स्तोत्रीये एवं षोडश साम्ना भवतीत्यन्यायः सामेतराङ्गानां लोप इत्युद्गाहमाने रथन्तरस्यैव स्तोत्रीये बृहद्रथन्तरे व्यत्यासं स्यातां नौधसस्य श्यैतनौधसे यत्र हि त्रिस्तत्पञ्चदश इति वा मनति बृहद्रथन्तर-पृष्ठः षडह इति वा व्यत्यासप्रयोगः एव तत्र भवतुपपद्यते च यदेकसामीकृत्य स्तवनात् षोडशसामेत्यवचद्यथायुभय-सामायं भवति कृत्स्नाभ्यामेवोभयसाम्न उपपद्यते न सामेतरा-ङ्गाभ्यामित्यथैके बृहद्रथन्तरं नाम समाधीयते तदिह प्रत्येतव्यं षोडशसामेति ह्याहाष्टादशसामा ह्यभविष्यद्बृहद्रथन्तरयोश्च श्यैत-नौधसयोश्च क्रियमाणयोरिति तदेतन्नोपपद्यते न हि श्यैत-नौधसं नाम सामाधीयते न पुनर्व्याहरते करणीये ॥ १ ॥

अथैतेषु बर्हिःषु संशयः समूढाहा प्रत्येतव्या व्यूढाहे [illegible]

समूढ़ादित्याहुर्वा हीमान् व्यूढ़ान् प्रतीयादविष्टुबजगतीका मस्य स्तोमप्रवर्ही: सवनप्रवर्हीस सुर्न्नो खल्वित्रिष्टु जगतीक मह: पञ्चामो ऽथापि सवनप्रवर्हाणां चतुर्थं चारयेद् यन्नायन्नीयं माध्यन्दिने सवने तृतीयसवने च न पुनः समानाह्नि साम्न: संचारो विद्यते ऽन्यत्र गायत्रादिति व्यूढ़ादित्यपरं व्यूढ़ो हि द्वादशाहस्य प्रकृतिः प्राकृतेनो एवं प्रदेशा वर्त्तन्त इत्यथाप्यन्यार्थं परिजिहीर्षन्नत्याय मेवा पश्येत यद्वैनमानन्तकल्पेन प्रदिष्टा-मन्येत 'प्रथमस्याह्न' प्रातः सवनं चतुर्थस्य माध्यन्दिनं सवन मिति चाह नो खलु बृहत्पृष्ठेषु राथन्तरं प्रातःसवनं विद्यते न रथन्तरपृष्ठेषु बार्हतं तदुभयं वा न्यायप्रत्ययोपनयेदुभयं वा देशबल: कुर्या दथापि यो द्वादशाहस्य दशाहानीति चापि चाध्यान् द्वादशाहविचारान् यथाविराट् सम्पन्न मनुरूपाग्नि-ष्टोमसर्म्मान मिति व्यूढ़ात् प्रतीयेत्तथेमांस्समूढ़ान् प्रतीयात बहुशब्यावाधात् ॥ २ ॥

अथैव भावापवर्गमेकाह ऋत्विज मकाम्य मपोह्याम्यं चर-यिष्यत इतीव मंथौ भवन्त्यथैते वाचस्तोमा बह्व्यादित्याहानि भवन्त्येकं कल्पाहस्तोमैवैकाहा वचनीया न हीना अन्यैवेयं तृतीया जातिर्भवति तद्यथा चातुर्मास्यानि राजसूयं च नैवे-काहो प्रतिजानते नाहीनो ताद्दृश मेतद्भवत्यथ यावञ्जिरात्युगे-षब व्यवच्छिन्नानि स्तोत्राणि वर्त्तिष्यमाणानि मन्येतादित एव तावन्ति वृणीत तेषां सर्वेषां सोमप्रवाकप्रभृतिकर्माण्यास्ते सर्वं सर्वाण्याज्ञातकर्माणि कुर्युर्यथा हियज्ञमाहुयज्ञेषु सर्वे यज-मानाः सर्वाणि याजमानानि कुर्वन्ति ताद्दृश मेतद् भवति सौत्राणि . त न सर्वे कुर्युर्यै एवौद्गात्रा स्तोत्राणि भजेरन् स

योगिका धर्मा इति न क्रियेरन्नित्येके स्वस्थानानि हि भवन्ति स्थानस्था धर्मा इत्यथापि कथं नु केवलस्तोत्राणिधर्म्मांल्लभेरन्नित्यथाप्यनन्ततरांस्तेऽपि जपाञ्जपेदन्वेषु स्तोत्र जपाद्यषु वै पुरस्तात् स्तोत्राणोपरिष्टाणां पुरस्ताज्जपान् जपेदुपरिष्टाज्जपान् व्यन्वेयुर्जपादयानि सामानीति कर्त्तव्या इत्याचार्याः सम्प्रयोगाद्धेषा मेते धर्मा भवन्तीत्यथापि स्थानादपेतानां क्रियमाणान् पृष्ठ्यासो ब्रह्मसामपृष्ठे च षड्हे ब्रह्मसामानि पृष्ठानि पृष्ठानि ब्रह्मसामानि सस्तोत्रीयाणि सधर्माणीत्यथापि स्वःस्थानानि च रान्ति होतुः स्तोत्र मपन्नान्यथापि स्वस्तोमानि भवन्त्यथापि स्तुतिपत्कानि भवन्त्यथापि स[?]ययो लोपो लोपाद्यायतरो भवतीति यथा एतत्स्थ नु केवलस्तोत्राणि धर्म्मांल्लभेरन्नित्येके केवल स्तोत्रे वै खलु बृहद्रथंतरे व्रते धर्मांल्लभेते यथो एतद्राज्ये युज्जपाव्यन्यानि सामानीति व्यवेति वै खलु बृहद्रथन्तरयोर्जपान् व्रतं एतेन संयुक्तेषु व्याख्यातं यथा विश्वजिति विश्वजिच्छिल्पामोर्यीम इत्याचापभूतानि गर्भभूतानत्यामोर्यीम इति गौतमस्तेनाकर्त्तव्या इत्यथानुग्रहीत पृष्ठे च षड्हेऽनुग्रहीतबृहद्रथंतरे च नोत्तरे चतुरहे बृहद्रथंतरयोः साम्प्रयोगिका धर्माः क्रियेरन्निति भन्यंते न ह्यवान्तर्यविप्रयोगी बृहद्रथंतरयोः साम्प्रयोगिकाः क्रियंते कर्म्मोमिच्चिति कथं विप्रयुक्तानामपि न क्रियेरन्नित्येके सम्प्रयुक्तानां माज्यावान् कथं विप्रयुक्तानां प्रतीयामेत्यथापि बृहद्रथंतरयोः सम्प्रयुक्तौ रैवतरे पृष्ठे रथ व्यतिवर्त्तनं च दुन्दुभ्याहननं च भवतो मासंयुक्तयोर्मद्दानाम्नीनां विप्रयुक्तानामपि भव मुदघोषं मन्यंतेऽपि ह्यस्तोमे सं स्वाध्याये धर्मो भवतीति मन्त्रपाणिनयं यथा स्यात् ॥ ५ ॥

तान् खल्विमान् षडहविचाराननङ्गभूतस्यैके मन्यन्ते यथा ज्योतिष्टोमविचारान् द्वादशविचारानित्यत्र यदि सात्विक इति न्वनङ्गभूतेनोपपद्यते संवत्सराङ्गभूतस्येत्यपर आह च हि बहवः षडहविचाराः पृष्ठ्यं मन्तरुपयन्ति इति स सांशयिकः संवत्सराऽथ य एव संवत्सरे षडहस्य पृष्ठतो विचारास्ते विश्वजित इति तु भवति यथाहीनिक इति तु संवत्सराङ्गभूतेषु नोपपद्यते द्वादशाहाङ्गभूते तूभयमुपपद्यत आहीनिके ऽथ यदि सात्विक इति तस्माद् द्वादशाहाङ्गं स्यादित्येतरान् पृष्ठ्यादत्र तस्मादिष्यते भवन्ति सांशयिकेन च सांशयिकानि तज्जातीयानि प्रमातव्यानि भवन्त्युपपद्यते यत्सांवत्सरिकैर्विचारैर्विश्वजितं प्रदिशेत् षडहसामान्याचान्तरं पृष्ठ मामनेन ॥ ९॥

अथैतस्य बृहद्रथन्तरपृष्ठस्य द्वादशाहस्य नानदस्तोत्रीये गौरीवितं षोडशिसाम स्यादित्येके पृष्ठस्तोमेन ह्येवं प्रदिशतीत्यथापि विराजा मपाया स्वराजोपयन्तीति हेतु बृहद्रथन्तरे तस्यैव पद्यो बृहद्रथन्तरपृष्ठताच्च लोव समूढ चाभिप्रे पृष्ठस्तोमेन प्रदिशति यो हि सर्वमेव पृष्ठस्तोमस्य प्रतीयाच्छन्दोमवतः सन् दशरात्रस्य सभायाः प्रथमादह्नोपनयेत् कण्वरथन्तरं सप्तमस्य माध्यन्दिनादो मिति ब्रुवन् जामिकत्व मापद्येत नेति ब्रुवन्तस्तृचव्याहव्यादयोऽपि यत् समयुक्ता विराजः स्वराजश्चाभविष्यन्त वैराजपृष्ठादन्यत्र स्वराजो ऽभविष्यन्त च वैराजपृष्ठे ऽन्यं संशयः षोडशिस्तोत्रीयसाम्ना स्यादिति नन्वेवं न भवत्येते न मन्यन्ते स्वराज एवेह प्रत्येतव्या इत्येकाहे प्राकृताश्च भवन्ति न्याय्यतराश्चेन्नायैवानादेशे सर्वक्रतुषु प्रतियन्त्येतेनावच्छिन्नस्य बृहद्रथन्तरपृष्ठस्य

षडहस्य षोडशस्तोत्रीयो व्याख्यातो यथैव षडहविचारेषु यत्र सप्तत्रिंशमि सप्तत्रिंशति ॥ ७ ॥

अथ छन्नानिधनानीडोपायासुक्ताकृतिरूपोऽर्वं रहस्यवद्ध्यन्दा-स्वर्गोध्यमि सोमान्या पूर्वा वा काशीतार्कद्वदाङ्गिरसदैवोदास-कुम्भानीयेकिने स्वरा मुज्ञाने मां न इन्द्रेति यथा निहतः स्वनेद् गुरुपाभार मभिनिधायाभि त्वा पूर्वेति वषट्कारः कायमायां वाग् गव्यो षु णः सखाय आयाहीन्द्रस्येन्द्रपृत्सु यथाप्सु पिप्पिल मवपदेतापो वा प्रमिवाय क्षिष्कत्य दिवं गच्छा२३ हृष्टा दिवं गच्छा २३ इति ह्रीष्टिदामस्येद् ग्रहकामस्य न कत्येत्यभि वस्त मिन्द्र जोहार्चिकेकस्त मिन्द्रपरे स्वर्ज्योतिषी पृथक् कुत्सः को कस्त्वद्रोदिस्पावद्भि र्न मिन्द्र इव दस्यू२ण् रमृणा२३४५ सूर्य इव दस्यूँ२ण् रमृणा२३४५ वजिन्स्वर्णी२३४५ नपिबैव तेषा मेकं द्वे पूर्वे वोत्तरे वा सर्वाणि वा समस्यान्नाम्स मेव स्वरयेद्यथा वाथाभस्त्र मन्युरपादन्यासकिङ्किणीनां पृथक् यौतानयोरा२ईन्द्रा२ आ२ ना२ था२ना२३४५यि सप्तस्थानेषु यथाधीत ब्राह्मणस्य सञ्जित्यै विजित्यै रुञ्जित्यै सजित्यै जित्या इति चोद्रियस्य सम्पुष्ट्यै पिपुष्ट्यै सत्पुष्ट्यै पुष्ट्या इति वैश्वस्योपगवयो रथकामस्तु नानाभिवर-धीयेषु मन्यत्राग्निर्ण् होतेति यथा महादिवाकीर्त्यस्थाम्नतोऽन्ततो निधनं पाद्विप्रेतिः कालेयमि च तयो विकल्पा दयित्वं वेऽह२३ दयित्वेऽह२३ अयित्वे ह२३४५ एव मेव सामान्ते ना२कमा२ न्या२३ पौ२ दो२वा२ दम दमृताः पञ्चिण्यो दा२म दमृता२३ इति वाक् सहस्रथन्तरयो: ॥ ८ ॥

अथातः प्रतिहारस्य न्याय मुद्देशं व्याख्यास्याम उत्तम प्रति-हारस्थानं तत्र पदसञ्ज्ञा ऽनादेशे चतुरक्षर मात्रं न्याय्य प्रतीय तृ

सङ्ख्याविवृद्धिकारी च सङ्ख्याशब्दे वार्त्तीभिकान्यक्षराणीति विद्यात्तस्य पुरस्तात् स्तोभा न्यायेनोद्गात्रुपरिष्टात् प्रतिहर्त्तुः समानान्तु पुरस्तात् प्रतिहर्त्ता स्तोभं भजते न्यायप्रतिहाराणां मिडासंचाराश्च सूतैः स्वारवार्षाहरस्वारकौत्सयोराङ्गिरसाभ्यासयोः क्रौञ्चानां पञ्चानामुपरिष्टादुद्गाता सोमिधयोर्षायवयोर्ऋषभपावमाने निधनमार्गीयवाणां मनेकप्रतिहाराणामुत्तरमसादृश्यात् पूर्वपदेषु पदसङ्गगीतीनि विभाज्यानि तत्र पदं पदं विभजन्त उपोत्तमं पदं प्रतिहर्त्तुः स न्याय्य आ समपदाभ्यो धर्मविधर्मयोश्चैवं चतुष्पदाकारे त्रिपदानां तु तृतीयस्य स्तोभाद्यष्टकस्य मे द्वैधं बर्हिर्निधने दीर्घं सुतमिति यथा वैध मन्त्रनिधने यथा गोराङ्गिरसस्योष्णिहान्तु विभाज्ये तृतीये ऽष्टाक्षरं चतुरक्षरमुद्गातुर्यथा दैवोदाससोमित्रयाविच्छन्दःस्वक्षरवृद्धिलोपयोः तत्र गीतेन प्रतिहारं विद्यात् प्राग्यच उपायतान्तस्तोभः पदनिधनेषु यथा श्रेष्ठप्रतोदयोः ॥ ९ ॥

छन्दान्मेधार्थीयाणां विच्छन्दसामनुच्छन्दस विनियोगमन्यत्र तु जागतमासवाजजितौ विच्छन्दसो भास मनुष्टुभो बृहत्पृष्ठे विषुवति द्विपदा वाजजिच्छन्दो भवति दशरात्रे छन्दसा जाम्यसञ्चारस्यामेव समीक्षेत प्रतिहारग्रहणेनेदन्ताः सामः प्रतीयात् सन्निपाते च पूर्वं क्रमलिङ्गाभ्यां स सङ्ख्यानादीं वमाद्यमन्त्यमिति दशतः सन्निपाते ऽनन्तरस्याः सामपूर्वग्रहणेन न्याय्यमथान्येषु सङ्ख्यामीमेकप्रभृतीनां यथासङ्गं पदं प्रतीयादुत्तरयोरिति वैकं चेदार्षेय मुद्रानेकाः साम ब्रूयात्तावतां तदार्षेयं प्रतीयात् प्रतीयात् ॥ १० ॥

/ बृहद्गारद्वाज मस्य या२२ ज्ञा३ नि वा३ रा४२ इत्यौशनं न्याय्यो

वा साकमश्वꣳ सया२३ हा३यि तदुक्थेषु वात्स मग्नायित्वा३
का३ जराबोधीयꣳ स्तोमाꣳ रुद्रा२३ वारवन्तीये वारवन्तं वन्दध्या
नमोभिः संम्राजन्ता मित्युत्तमे स्तोभौ वेहेति तदनादेशे सैन्धुक्षित
माक्षानप्त्र२३ खल्वेतस्याꣳ सैन्धुक्षितं स्वार मुक्थेष्वेडं पाव-
मानेषु चतुर्था स्वारं माध्यन्दिन मापद्यते ऽभिषेचनीये गोसवयो-
श्छन्दोमपवमानयोश्चाक्षानप्त्रो२३ हा इहवद्वामदेव्य मग्निर्नो
वꣳ सुतार२३ यामि समूहद्वदाणि तयोन्यायौ काशीतꣳ ꣳयोरभी
तऽभिप्लवस्वरसाम्नोर्गौराङ्गिरसस्य सामो होइ हू३ वार३यि
भुवः गोपातस्थ यज्ञायज्ञीयं दा३सान्नामेध मूर्जाम्याता चताश्वभा
इति च स्तोभान्तौ भरद्वाजस्य पृश्निरेवास्यार वा३ होवा३ हाइ
पौरुमद्गं द्विवासायौत्म ओ२३४ ना माक्षव मद्यादा२३ यिवाꣳ
गौतम मायिवासा३ हा हो३ दैर्घश्रवस मधो३नं पा३ माया
इति च पौरुमीढ मग्निः सू२३ दी मानवे यज्ञमस्या२३ यज्ञा-
मा२३ स्या इत्युत्तरे तदनादेशेऽन्यत्र पृष्ठाभिप्लवयोरभीवर्त-
लोकात् ॥ ११ ॥

समन्तं चक्ना३यि या३सौ२३ हो३ वा३ हा३यि श्यावाश्व मि उा२
स्पद३यि सर्वं पद न्याय्यो वैमꣳ स्तोमं यज्ञसारथि वसिष्ठस्य
वैराज मन्त्य तन्मर्यायः भरद्वाजस्य प्रसाह मन्त्यं त्वेषस्ते यामं
बृहदाग्नेयं वा३ सा२३उवा३ यद्वाहिष्ठीय मुत्तरं त्वदा३ना३ बृह-
द्वर्ण सञ्जिवीवेति च विवतिहारं वैदिशोविश्वीध मो३ हुवा३यि
शू२षा३ पूर्वो वा द्व्यक्षरस्तोभान्तः परो वा द्व्यक्षरस्तोमादि रावेयं
मत्तो३ सो३ दा३ चारूढवदाङ्गिरस मासिते तयोन्यायावुत्तरं
द्विरष्टमे छन्दोमवतो दशरात्रस्य नवमपौण्डरीकस्य पूर्व-पूर्वमतो
ऽन्यत्र श्रुधिया इति ग्राम्य मष्टाचारो वा ककुप्सु नाना न्यः घोक्ष्य

बृहतीषु दश नेदं व इति चतुरचरी गायत्रीषु प्रेमं छिष्ठीय मुपा३ श्री३ हो३ गायत्री सामासित मुपा३ हो३ ई नुता३ हो३ वाजभद्या स्या३ हा३ त्वां३ सा३ सौभरं ई३ वता२ हव्य मू३३ हा३ साध्य मा३ स्वया३ म्रा२३ अगस्त्यस्य वाचोग्नो मर्त्यं यदा उ विप्रपतिरिति ॥ १२ ॥

अंयन्नी औ३ हो३ यिगा२ वा३ यि तदनादेशे अंयन्ना२३ इवे३ आश्व ते२ ननु न्ना२३ म्मा३ ऐटत मंह्नीया३ वान् उभाकर्णेति च दारसु निधने न्याय्य इडानां संतारे च स्तोभादिर्गौषूक्तं स्तो२ ता२ मे२ गो२ सखी३ हुवा३ इ हुवा३ इ आश्वसूक्त मा३ स्तोता२३ मा३ ई गो२ गारं मा३ ना३ भा३ या३ न् सौपर्णानां मैडं सामभिकं स्वारं नावमिकं निधनवदाष्टमिकं तद्दिलं सौपर्णं मत्स्यं न्याय्यो द्यचरी परयोः शाकलं सा३ र्वा२ मुषिाञ्च रोहितकुलीये वा३ र्षी३ वा३ र्षी३ ष्ठा३ मू२ इत्युत्तरे तदनादेशे दारसहिन्ना२३ ईस२ वा३ ३ ऐश्मराह मनादेशे येषा२ मिन्द्रो२ युवा२ इन्द्रा३ ये३ षा२ न्ना३ यिन्द्रा३ ओ२३ वा३ इत्युत्तरे समस्य मरुतां सावेश्रीयं हाविषत् हाविष्कृत योन्यावयो काचीमतं य औहो३ वा३ दचनिधनं तन्मोचं परा२ दूरे३ ष्वा३ हो३ वा३ हा३ औपगवे तं सौश्रवसे इन्द्रो२ रा३ यिन्द्रा३ यवा२ र्शा३ इरा३ इति न्याय्यो वा पूर्वं मर्षिष्विष्टा होत्रीयं निष्कामकाम मिहा२ हो३ वाजदावर्य्यः चू२ मा३ ॥ १३ ॥

॥ इति उपग्रन्थसूत्रे तृतीयः प्रपाठकः ॥

## ॥ अथ चतुर्थः प्रपाठकः ॥

॥ हरिः ॐ ॥

वैतहव्यं यद्वोकोनिधन॰ आ३ता३आ३तू३॰ षडक्षरो वा गौरीवितं तच्छायं दा३ना३या३ता३ चतुरक्षरो वा काण्वं आ२३र्गी३: औतकक्ष मा२कंमर्वा३हा३ दैवोदास॰ रात्रिषामे२२ हा३यि मा३ष्या३ आकरवर्ण॰ साध्यकेषु गुहू२मा३सा३ औदल॰ षडु-वाँ२मा३ इति न्यायो वार्षभं ता३म्पर३ कौत्से ऽपरे तयोर्न्याय्यौ पूर्वमर्णादेये सौमेध॰ सरता॰य आ३ दैवातिथ॰ हयायि सा३खा२ यशो२ म॰॰ औ३हो३ं आश्व॰ षष्ठे गायत्रीसामं पिबा२ तु वस्या३ गवा३हा३यि घृतश्चुन्निधनं माधुच्छन्दसं ऽपिबा३ तुवी२ हो२वा२हा३ आकूपार॰ रात्रिषामे२ हो३यि महा२ह ऽा२हा३ होइ३ गौरीवित॰ सुनु॰॰सत्रा३ वामदेव्य॰ छयौहो३ इम्मा२ न्याय्यो वा समासाहीयि॰ सियी२३ होवा३हा३यियि न्याय्यो वा त्वाष्ट्रीसामं गायत्रीषु वम्बांगौ३सा३चतुर्थे त्रैककुभे अदीचीनेडक्षा-मीतं प्रनपा२यु॰श्षो३ ता३ सार्कमश्वं तद्दुरा॰ साम वय मिन्द्रा३ आसि स्वातरि-ति च स्तोभान्तो हरिश्रीनिधन मिन्द्रा३स्वा३दा२ आ त्वा सिन्धुषाम सौमित्रं वा३जी३ सामहीयव मुक्थेष्वा३इवा३ ते२रान् ॥ १ ॥

औत॰ सहस्रे२षा३यि आ२३षा३ आभीवर्त्त इन्द्रा३इषा३इ-

वार्हदुकथं गकिटा१दार्२ वाम्रं मन्दा१ना भीं१ माधुच्छन्दस सुपा१खा१दा१ औ२ह्रो२१ वा२हा१ ॥ ३ ॥

असावि निहवं औरुत्तय॰ सूजा हा रा२३ पूर्वं वातः पदं पार्थं मो२१ ह्रौ१ह्रो१यि जग्ध्या वात्सप्रं तृतीयोत्तमे उत्तम मनादेशे नाके रामं परिगणेषु ब्रह्मयज्ञान मृतुसामनी हवस्य वीनानं त्य मु ताच्यंसामनी वार्तंतुरं विसा३यिना१भिभयमा१ना२न् उद्द॰- श्रोस मुद्द॰ग्र मी१ वया१३यि मी२१रे चतुरुत्तरं वाभ्यासादिरेया- वती आष्टाद॰ष्ट्रे पूर्वं सक्रुद्ध्यक्थे हीनरात्रावुकथं द्विरुत्तर मभि- प्लववेदत्रिरात्रयोर्ज्योतिष्टोमे च पूर्वेण विकल्पो महावैश्वामित्रे गौतमं धा२रा३ औ२हो१ वा२ ऋता३ औ२हो२२वा१ वसिष्ठस्य प्रियं धा१रा२ ओ२३ग्र्रै१आ२र्त्ता१ ओ१२३४वा२ आकूपार मनादेश उभया॰ हा१ वीङ्क तस्यैव पर्वोत्रादिस्तैरश्चा॰ रा३या३स्पू१र्द्दी२१ हा२१हां१यि वैश्वामित्र॰ रजा१: मूर्ध्यौ१वा१ ओ१वा३ शुद्धाशुद्धीये तयोर्न्याय्यौ॰र्पूर्वे मनादेशे नानद मा१ पश्चा दा१ मधुश्चनिधनं दा३यि वे२ षुधा१ हा१हा२॰ औ१हो१वा१ श्रा छिद्रौ१ मारुतं धर्त्ता१वज्री१वा३ औ२१वा३ त्रैशोक मुतो१ हा१यि ग्रैखण्डिगमच्छ त्रासदस्यव मुत्तरं वैधन॰ सौमसाम यस्यधायो२ नदि चरन्तौ१ मा३नु१षमो३ हा२र्ह्रो१यि वरुणसाम विष्का१भा१यिते३ श्येनः सन्नौ२हीं१मह्रो१ हो१ पूर्वा वाताः पदे ॥ ४ ॥

क्रोश॰ स्या२द२ब्रा१स्या१ कौत्स॰रात्रिषाम महा१॰ हा३यि षा:१ पूर्वं वा॰ चतुश्चरं तदोकोनिधनं हारिवर्ण मुलो१का१ ऊ२ ह्रो३अ१हा३ वैतं यहा२ मिरुसुमा२टा३बो३हा३यि मार्गनं चो१ दयता३यि मा३ह३ वैश्वमनस॰ग्तिया३ये३ सौमित्र मौ ह्रौ हो३यि औ३हो३ इषो१२३४५ वा६५ त्रैककुभं तृतीय॰ प्का१३१गा३

आत्मर यज्ञा३२३ऽसि वाच दैवोदासे ग्रस्या३२,३ या २३ सांवर्त गिरा३यिनं वौ२ हो३वा३ म्हो दैर्घतमस सोतुर्वा२ हुभ्या३ऽसुंयता३३: सुवता३: शार्करं लिना३यता३ स ३ वसुषा३यि न्याय्योवा वहत्व दृढाचौ३ड्डा३: येषिरमू३ दे३ वागमा३ प्राहा यात स्तोग्मत मिषा३ऽ स्तो३तृ३ सञ्जय मिषऽ स्तोमृ३भ्या३ आ३ सौहविषाणि पू२ष्णो२भा३ हा३यि तदनादेशे पू२ष्णो२ भगा२या पू२ष्णो३ वा३ ओ२३४ भा३ कं पर्युष्विति मध्यमं धर्मविधर्मणोर्द्विपदाकारे दशभिः स्तोभैः षडदशभैर्वा द्वौ चेत्स्तोभ-विभागेवा पञ्चाक्षरशो वाजिनां साम श्लोकानुश्लोके उद्वंशपुत्रो वा३यिं प्रा२यगा२थं गा२३या३४ ता३ गूर्दः शिवो२भुवा३: भास्ता-पत्य मतिच्छन्दस मयऽ सहोद्वा इत्यग्नि ऽद्योतोत्तरे काहंसत्ये अग्नेर्वा व्रताचोपे ॥ ५ ॥

ऋषभाभीकयीकयऽ शा३२४मा३ शतनिधनं बाभ्रवं भू३या३ हा३यि शामा३ हा३ शैशव मुयऽ शा३४३मा३ आमहीयव मुश्र शर्मा३ आजिग मिन्द्रा३ या३ पा३ अष्टमिकं सुरूप इन्द्रायमा३ इया२३ इया३ इन्द्राय मौ३ ही३इया संहितं मा२३ इन्द्रा३ औशुभार्गवं विश्वादा३ भा३ यौक्ताश्वं ओहोहो३ हा३इ विश्वा विश्वा ओहोहो३ हौ३इ एकपूर्वः परे पूर्वं तनादेशे सोमसाम दाइवा वा३इ रा३ हा३उ उत तदनादेशे भासं दा३यि वा२३ पूर्वौ वा हरवरो ऽपरेर्ड सोमसामं दैर्घ्यावौ२रा३ हा३ई कुत्सकं-वैष्टम्भं हुरायि रा२३यि तौ३ई हौ३ा३ हा३यि पार्थौ कनी३ हुवा३यि हो३ वा३ दूषोव्रधीय मर्कस्यायो३ च्यावन ता३यि मा३ हा३यि वैदन्वतानि मदा३इ पु३सा३इ३या३ इति प्रथमे सर्वधा३ अमा३ई उभयतस्तोभे हे स्तोये वासस्तोभ मुभौ वा

